सीता । हा ताद ! णिव्वूढो दे अपच्चसिणेहो । (न)

रामः । हा तात ! काश्यप ! शकुन्तराज ! क्व पुन-स्त्वादृशस्य महतस्तीर्थस्य साधोः सम्भवः ? । (प)

(न) हा तात ! निर्व्यूढस्ते अपत्यस्नेहः ।

---

एतच्चित्रदर्शनेन तत्तद्घटनास्मरणादनयोरत्यन्तव्याकुलत्वादिति भावः । अन्यतः अन्य-घटनायाश्चित्रे क्षिपामि सञ्चारयामि सीतारामयोश्चक्षुषी इत्यर्थः । अयेति व्यापारान्तर-चित्रदर्शनारम्भे । एतत् दृश्यमानम् । मन्वन्तरं देवपरिमाणेनैकसप्ततियुगानि तादृशि पुरा काले वर्त्तते इति मन्वन्तरपुराणस्तस्य । गृध्रराजस्य पक्षिराजस्य, तातस्य दशरथस्य मित्रत्वात्तातस्थानीयो जटायुस्तस्य । चरित्रं निस्स्वार्थभावेन सीतारक्षणोद्यमादिपरोप-कारादिकम्, विक्रमः रावणेन सह युद्धोपयोगिमहाशक्तिः तयोरुदाहरणं निदर्शनं तस्य चित्रमित्यर्थः ।

(न) सीतेति । अपत्यस्नेहः सन्तानवात्सल्यं निर्व्यूढः सम्पन्नो जातः सन्तानरूपाया मम रक्षार्थं प्राणत्यागादिति भावः ।

(प) राम इति । तात ! पितृसखत्वात् पितः ! काश्यप ! कश्यपप्रजापतिपौत्र ! स्वपत्न्यां विनतायां कश्यपस्य द्वौ पुत्रौ बभूवतुः अरुणो गरुड़श्च, तयोररुणस्यापि द्वौ पुत्रौ सम्पातिर्जटायुश्च इति रामायणवार्त्तानुसन्धेया । शकुन्तराज ! पक्षिश्रेष्ठ ! । तीर्थस्य विद्यापरोपकारादिगुणयुक्तपात्रस्य, साधोर्धार्म्मिकस्य सम्भवः उत्पत्तिः । न कुत्रापीत्यर्थः ।

"तीर्थं शास्त्राध्वरक्षेत्रोपायनारीरजःसु च । अवतारर्षिजुष्टाम्बुपात्रोपाध्यायमन्त्रिषु ॥" इति मेदिनी ।

---

(ধ) লক্ষ্মণ। ( স্বগত ) হউক, ইঁহাদের দৃষ্টি অন্য দিকে সঞ্চালিত করি। ( চিত্র দেখাইয়া প্রকাশ্যে ) মন্বন্তরের প্রাচীন, পক্ষিরাজ, মাননীয় এবং পিতৃস্থানীয় জটায়ুর চরিত্র ও পরাক্রমের নিদর্শন এই।

(ন) সীতা। হা পিতঃ! আপনার সন্তানস্নেহ সম্পন্ন হইয়াছে।

(প) রাম। হা পিতঃ! কশ্যপবংশীয়! পক্ষিরাজ! আপনার ন্যায় মহাগুণবান্ সাধু ব্যক্তির আর কোথায় উৎপত্তি হইবে?।

लक्ष्मणः। अयमसौ जनस्थानपश्चिमत-(१) श्चित्रकुञ्जवान् नाम दनुकबन्धाधिष्ठितो दण्डकारण्यभूभागः, तदिदमृष्यमूक-पर्व्वते मतङ्गस्याश्रमपदम्, इयञ्च श्रमणा नाम सिद्धशबरी, तदेतत् पम्पाभिधानं सरः। (फ)

सीता। जत्थ किल अज्जउत्तेण विच्छड्डिदामरिसाधीणं (२) पमुत्तकण्ठं रुदिअं आसी। (ब)

(ब) यत्र किलार्य्यपुत्रेण विच्छर्द्दितामर्षाधीनं प्रमुक्तकण्ठं रुदितमासीत्।

(फ) लक्ष्मण इति। अयमङ्गुल्या निर्द्दिष्टः असौ सः। तच्छब्दसमानार्थोऽयमदः-शब्दः। तथा च दर्पणः—"इदमेतददःशब्दास्तच्छब्दसमानार्थतया विधेया एव भवितुं युक्ताः।" इति। चित्रम् आश्चर्य्यं कुञ्जं लताद्याच्छादितस्थानमस्यास्तीति चित्रकुञ्जवान्। दनुकबन्धेन मस्तकशून्यशरीरधारिणा केनचित् दैत्येन अधिष्ठित आश्रितः। मतङ्गस्य तदाख्यस्य मुनेः आश्रमपदं तपोवनम्। श्रमयति तपस्यार्थमात्मानं या सा श्रमणा। सिद्धशबरी तपःसिद्धा काचन नीचजातीयरमणी। पम्पा अभिधानं नाम यस्य तत् सरः दीर्घिका। अस्य तीरजातफलविशेष एव 'पेपे' इत्युच्यत इति लोकप्रवादः।

(ब) सीतेति। यत्र पम्पासरसि। विच्छर्द्दितः वृद्धिं प्राप्तः योऽमर्षः असहिष्णुता तदधीनं सीताविच्छेदविह्वलत्वप्रयुक्तमित्यर्थः। प्रमुक्तः अनिरुद्धः यावद्वहिर्भवितुमर्हति तावद्वहिर्गत इत्यर्थः कण्ठः स्वरो यस्मिन् तत् उच्चैःस्वरमित्यर्थः।

(फ) লক্ষ্মণ। জনস্থানের পশ্চিমে দনুকবন্ধকর্ত্তৃক অধিষ্ঠিত চিত্রকুঞ্জবান্ নামক এই সেই দণ্ডকারণ্যভূভাগ; ঋষ্যমূকপর্ব্বতে এই সেই মতঙ্গমুনির আশ্রম স্থান; শ্রমণানাম্নী সিদ্ধশবরী এই এবং এই সেই পম্পানামে সরোবর।

(१) जनस्थानपश्चिम इति क्वापि पाठः।

(२) विच्छिन्नामरिसाधीणं, विसज्जिदामरिसधीरत्तणं इति पाठभेदौ।

রামঃ। দেবি! রমণীয়মেতৎ পম্পাসরঃ।

এতস্মিন্ মদকলমল্লিকাখ্যপক্ষ-
ব্যাধূতস্ফুরদুরুদণ্ডপুণ্ডরীকাঃ।
বাষ্পাম্ভঃপরিপতনোদ্গমান্তরালে
সংদৃষ্টাঃ কুবলয়িনো ভুবো বিভাগাঃ ॥৩১॥

লক্ষ্মণঃ। অয়মার্য্যো হনূমান্।

---

এতস্মিন্নিতি। এতস্মিন্ পম্পাসরসি মদকলা মদমত্তা যে মল্লিকাখ্যাঃ পক্ষিবিশেষাঃ তেষাং পক্ষৈঃ ব্যাধূতানি কম্পিতানি স্ফুরন্তি প্রকাশমানানি উরুদণ্ডানি বৃহন্মৃণালানি পুণ্ডরীকাণি পদ্মানি যেষু তে তথোক্তাঃ কুবলয়িনঃ উৎপলবিশিষ্টাঃ ভুবো বিভাগাঃ ভূপ্রদেশাঃ, বাষ্পাম্ভসাম্ অশ্রূণাং পরিপতনং ক্ষরণম্ উদ্গমঃ পুনরুৎপত্তিঃ তয়োরন্তরালে মধ্যে, একঃ বাষ্পাম্বুবিন্দুঃ পতিতঃ যাবদন্য উৎপদ্যতে তাবৎকালমধ্য ইত্যর্থঃ সংদৃষ্টাঃ অবলোকিতাঃ ময়েতি শেষঃ। তদানীং তব বিরহদুঃখেন অবিরতমেব ময়া রুদিতং কিন্তু তথাপি অত্যন্তমনোহরত্বাৎ তৎপ্রদেশা দৃষ্টা ইতি ভাবঃ।

অত্র দণ্ডপুণ্ডেতি ব্যঞ্জনসঙ্ঘস্য অনেকধা সাম্যাৎ ছেকানুপ্রাসোঽলঙ্কারঃ।

প্রহর্ষিণী বৃত্তম্ ॥৩১॥

---

(ব) সীতা। যেখানে আর্য্যপুত্র, অত্যন্ত অসহিষ্ণুতাবশতঃ মুক্তকণ্ঠে রোদন করিয়াছিলেন।

রাম। দেবি! এই পম্পাসরোবর বড়ই মনোহর।

অশ্রুজলের পতন এবং পুনরায় উৎপত্তি ইহার মধ্যসময়ে এই সরোবরের মধ্য স্থানগুলি দেখিয়াছিলাম ; এই স্থানসমূহে বহুতর উৎপল ও পদ্ম ছিল ; পদ্মগুলির আবার বৃহৎ দণ্ড সকল প্রকাশ পাইয়াছিল ; সেই দণ্ডগুলি আবার মদমত্ত মল্লিকাপক্ষিগণের পক্ষপবনে কম্পিত হইতেছিল ॥৩১॥

লক্ষ্মণ। এই আর্য্য হনূমান্।

सीता। एसो सो चिरणिव्विसजीअलोअपच्चुद्धरण-गुरुओवआरो महाणुभावो मारुदो। (भ)

राम:। दिष्ट्या सोऽयं महाबाहुरञ्जनानन्दवर्द्धनः।
यस्य वीर्य्येण कृतिनो वयञ्च भुवनानि च ॥३२॥

सीता। वच्छ! एसो कुसुमिदकअम्बतरुतण्डविदवरहिणो किंणामधेओ गिरी? जत्थ अणुभावसोहग्गमेत्तपरिसेसधूसर-

---

(भ) एष स चिरनिर्विषजीवलोकप्रत्युद्धरणगुरुकोपकारी महानुभावो मारुतिः।

---

(भ) सीतेति। चिरनिर्विषस्य अन्यकृतापमानादिभिरवज्ञातस्य जीवलोकस्य प्रत्युद्धरणेन तत्तद्दुःखविनाशेन गुरुकोपकारी महोपकारी महानुभावो महाप्रभावो मारुतिः मारुतस्य वायोरपत्यं हनूमान्। धन्योऽयमिति भावः।

दिष्ट्येति। दिष्ट्येत्यानन्दसूचकमव्ययम्। अयं दृश्यमानः स प्रसिद्धः महाबाहुः विशालभुजबलशाली अञ्जनानन्दवर्द्धनः पुत्रत्वेन अञ्जनाख्याया वानर्य्याः सुखवृद्धिकरः हनूमानित्यर्थः। यस्य हनूमतो वीर्य्येण बलेन वयञ्च भुवनानि च कृतिनः सीतोद्धारेण जगद्वैरिरावणवधेन च सफलकामा इत्यर्थः, हनूमतो बाहुबलेन सीता उद्धारिता रावणश्च हत इति भावः।

अत्र भुवनानि चेत्यनेन "कृतीनि" इत्यध्याहृत्यान्वयः कार्य्यः अन्यथा "नपुंसकानपुंसकयोर्नपुंसकमेकवद्वा" इत्यनेन कृतिन इत्यस्य नपुंसकत्वमेव स्यात्। अतएवात्र न्यूनपदत्वदोषः, स तु "वयञ्च जगती जना" इति पाठेन समाधेयः। तथा पाठे तुल्ययोगितालङ्कारश्च स्यात् ॥३२॥

---

(ভ) সীতা। চিরদুঃখিত জীবলোকের উদ্ধার করায় গুরুতর উপকারী ও মহাপ্রভাবশালী এই সেই হনূমান্।

রাম। ভাগ্যবশতঃ মহাবাহু ও অঞ্জনার আনন্দবর্দ্ধক এই সেই হনূমান্‌কে দেখিতেছি, যাহার বলে আমরাও কৃতার্থ হইয়াছি, ত্রিভুবনও কৃতার্থ হইয়াছে ॥৩২॥

सिरो मुहुत्तं मुच्छन्तो तुए परुदिएण (१) अवलम्बिदो तरुअले अज्जउत्तो आलिहिदो। (म)

लक्ष्मणः। सोऽयं शैलः ककुभसुरभिर्माल्यवान् नाम यस्मिन्

नीलः स्निग्धः (२) श्रयति शिखरं नूतनस्तोयवाहः।

रामः। वत्सैतस्माद्विरम विरमातः परं न क्षमोऽस्मि

प्रत्यावृत्तः पुनरिव स मे जानकीविप्रयोगः॥२३॥

---

(म) वत्स! एष कुसुमितकदम्बतरुताण्डवितवर्हिणः किं नामधेयो गिरिः? यत्र अनुभावसौभाग्यमात्रपरिशेषधूसरश्रीः मुहूर्त्तं मूर्च्छन् त्वया प्ररुदितेन अवलम्बितस्तरुतले आर्य्यपुत्र आलिखितः।

---

(म) सीतेति। कुसुमान्येषां जातानीति कुसुमिताः पुष्पिता ये कदम्बतरवस्तेषु ताण्डवान्येषां जातानीति ताण्डविता नृत्यन्तः वर्हिणा मयूरा यत्र स तथोक्तः। यत्र गिरौ तरुतले अनुभावेन तेजसा यत् सौभाग्यं सौन्दर्य्यं तन्मात्रं परिशेषम् अवशिष्टं यत्र तादृशी धूसरा पाण्डुवर्णा श्रीः शोभा यस्य सः कृशाङ्गोऽपि स्वाभाविकतेजःसम्पन्न इत्यर्थः। मुहूर्त्तं मूर्च्छन् कियन्तं कालम् अचैतन्यो भवन् प्रकृष्टं रुदितं यस्य तेन अतीवक्रन्दता त्वया अवलम्बितः धृतः। आलिखितश्चित्रितः।

"मयूरो वर्हिणो वर्हो"ति "ताण्डवं नटनं नाट्य"मिति चामरः।

सोऽयमिति। ककुभैरर्जुनपुष्पैः सुरभिः शोभनगन्धोपेतः माल्यवान् नाम अयं

---

(ম) সীতা। বৎস! যেখানে পুষ্পিত কদম্ববৃক্ষের উপরে ময়ূরগণ নৃত্য করিতেছে, ইহা কি নামক পর্ব্বত? যাহাতে প্রভাব ও সৌন্দর্য্যমাত্র অবশিষ্ট এবং ধূসরকান্তি আর্য্যপুত্র কিছুকাল মূর্চ্ছিত হইতেছেন, আর তুমি রোদন করিতে করিতে উঁহাকে ধরিয়া রাখিয়াছ; এই অবস্থায় বৃক্ষের তলে আর্য্যপুত্রকে চিত্র করিয়াছে।

---

(१) परुण्णेण इति पाठान्तरम्। (२) नीलस्निग्ध इति पाठान्तरम्।

लक्ष्मणः । अतः परमार्य्यस्य तत्रभवतां कपिराक्षसानाञ्च असंख्यातान्युत्तरोत्तराणि कर्म्माश्चर्य्याणि, परिश्रान्ता चेयमार्य्या, तद्विज्ञापयामि विश्रम्यतामिति (१)। (य)

दृश्यमानः स प्रसिद्धः शैलः पर्वतः, नूतनः अचिरपूर्णजलः अतएव नीलः श्यामलः स्निग्धः चिक्कणश्च तोयवाहः मेघः यस्मिन् यस्येत्यर्थः शिखरं शृङ्गं श्रयति अवलम्बते ।

वत्स ! लक्ष्मण ! एतस्मात् माल्यवत्पर्वतचित्रदर्शनात् विरम विरम निवर्त्तस्व निवर्त्तस्व । कथमित्याह अतः परं न क्षमो न शक्तोऽस्मि द्रष्टुमिति शेषः । अत्र हेतुमाह, स पूर्वानुभूतः मे मम जानकीविप्रयोगः सीताविरहः पुनः प्रत्याहृत्त इव प्रत्युपस्थित इव ।

अत्र भावाभिमानिनी वाच्या क्रियोत्प्रेक्षालङ्कारः स तु वाक्यार्थहेतुककाव्यलिङ्गेन सङ्कीर्य्यते ।

"इन्द्रद्रुः ककुभोऽर्जुन" इत्यमरः । "हरीतक्यः फलानी"तिवत् ककुभशब्दस्य पुष्पार्थेऽपि वृत्तिः । यस्मिन्नित्यस्यैव यस्येत्यर्थः । "तथा च षष्ठीसप्तम्योरर्थं प्रति भेदो नास्ति । यथा—वृक्षस्य शाखा वृक्षे शाखे"ति विलोचनः ।

मन्दाक्रान्ता वृत्तम्—"मन्दाक्रान्ताम्बुधिरसनगैर्मोभनौ गौ ययुग्म"मिति लक्षणात् ॥३३॥

(य) लक्ष्मण इति । आर्य्यस्य भवतः । कपिर्वानरः । असंख्यातानि संख्यारहितानि बहूनि । उत्तरोत्तराणि क्रमिकाणि कर्म्माश्चर्य्याणि सुग्रीवसख्यवालिवधसमुद्रलङ्घनादिमहाद्भुतानि कर्म्माणीत्यर्थः । "आहिताग्न्यादिषु वा पर"मिति आश्चर्य-

---

লক্ষ্মণ। অর্জ্জুনপুষ্পে সুগন্ধি এই সেই মাল্যবান্ নামে পর্ব্বত ; নীল ও স্নিগ্ধ নূতন মেঘ, যাহার শৃঙ্গ আশ্রয় করিতেছে।

রাম। বৎস! এখান হইতে বিরত হও; ইহার পর আমি দেখিতে সমর্থ হইতেছি না। কারণ, পুনরায় যেন সীতার বিরহ, আমার নিকট ফিরিয়া আসিতেছে ॥৩৩॥

---

(१) विश्राम्यतामिति पाठभेदः ।

सीता। अज्जउत्त! एदेण चित्तदंसणेण पच्चुप्पसदोहदाए अत्थि मे विस्सप्पं। (र)

रामः। नन्वाज्ञापय। (ल)

सीता। जाणे, पुणो वि पसस्सगम्भीरासु वणराइसु विहरिस्सं, पवित्तणिम्मलसिसिरावगाहाञ्च भअवदीं भाईरहीं अवगाहिस्सं। (व)

---

(र) आर्य्यपुत्र! एतेन चित्रदर्शनेन प्रत्युत्पन्नदोहदाया अस्ति मे विज्ञाप्यम्।

(व) जाने, पुनरपि प्रसन्नगम्भीरासु वनराजिषु विहरिष्यामि, पवित्रनिर्म्मलशिशिरावगाहाञ्च भगवतीं भागीरथीमवगाहिष्ये।

---

शब्दस्य परनिपातः। इयमार्य्या सीता परिश्रान्ता बहुक्षणं यावत् दण्डायमानतया चित्रदर्शनादिति भावः। विश्रम्यतां सीतयेति शेषः।

(र) सीतेति। प्रत्युत्पन्नो जातो दोहदोऽभिलाषो यस्याः सा, तस्याः मे मम विज्ञाप्यं निवेद्यम्।

(ल) राम इति। नन्विति सम्बोधने। आज्ञापय आदिश। अकृत्रिमपरमप्रेम्णा तवाहमधीन एवास्मि सुतरां विज्ञाप्यमस्तीत्यनुक्त्वा आज्ञाप्यमस्तीत्येव वक्तुमर्हसीति रामस्याभिप्रायः।

(व) सीतेति। जाने बुध्ये। मम इच्छास्तीत्यनुमानेनैव त्वया ममाभिलाषः

---

(য) লক্ষ্মণ। ইহার পর আপনার এবং মাননীয় বানরগণ ও রাক্ষসগণের অসংখ্য ক্রমিক আশ্চর্য্য কার্য্যসকল রহিয়াছে; এই আর্য্যা সীতাদেবীও পরিশ্রান্ত হইয়াছেন; সুতরাং নিবেদন করিতেছি যে, ইনি বিশ্রাম করুন।

(র) সীতা। আর্য্যপুত্র! এই চিত্রদর্শনে আমার ইচ্ছা জন্মিয়াছে; তাই কিছু জানাইবার আছে।

(ল) রাম। অয়ি! আদেশ কর।

राम:। वत्स! लक्ष्मण!।

लक्ष्मण:। एषोऽस्मि। (श)

राम:। 'अचिरं सम्पादनीयोऽस्या दोहद' इति सम्प्रत्येव गुरुभि: सन्दिष्टम्। तदस्खलितसुखसम्पातं रथमुपस्थापय। (ष)

अवश्यमेव पूरणीय: सुतरां पुनरपि पञ्चवटीविहार: गङ्गावगाहश्च ममावश्यम्भावीति ज्ञापनाय इच्छामीत्यनुक्त्वा जाने इत्युक्तम्। प्रसन्ना: नूतनपत्रपल्लवशालित्वात् स्निग्धा: गम्भीरा निस्तब्धभीषणा: तासु। पवित्र: पुण्यजनक: निर्म्मल: पापनाशक: शिशिर: शीतलश्च अवगाह: स्नानं यस्यां तां भागीरथीं गङ्गाम्। तथा च ब्रह्माण्डपुराणम्—

"अनेकजन्मसम्भूतं पापं पुंसां प्रणश्यति।
स्नानमात्रेण गङ्गायां सद्य: पुण्यस्य भाजनम्॥"

(श) लक्ष्मण इति। आदिश्यतामिति शेषवाक्यम्।

(ष) राम इति। गुरुभिर्वशिष्ठादिभि:, सन्दिष्टं वाचिकं प्रेषितम्। न केवलं ममाग्रहात् अपि तु गुरुणामादेशादपि अवश्यमेव अस्या अभिलाष: पूरणीय इति भाव:। तत् तस्मात् अस्खलित: अभ्रष्ट: सुखसम्पात: सुस्थतया गमनं यस्मात् तत् तथोक्तं समान-भावेन चलनशीलमित्यर्थ:। अन्यथा पूर्णगर्भाया: चक्रोट्टङ्कनादनवरतमूर्द्धाधोगमनेन सङ्घर्षेण च नितरां कष्टं भविष्यतीति भाव:।

---

(ব) সীতা। বুঝিতেছি; স্নিগ্ধ ও নিস্তব্ধ বনশ্রেণীর ভিতরে আবারও বিচরণ করিব এবং যাহাতে অবগাহনটী পবিত্রতাজনক, পাপনাশক, অথ চ শীতল; সেই ভগবতী গঙ্গানদীতে আবারও অবগাহন করিব।

রাম। বৎস! লক্ষ্মণ!।

(শ) লক্ষ্মণ। এই যে আমি।

(ষ) রাম। 'ইহার অভীষ্ট বিষয় অচিরকালমধ্যে সম্পাদন করিবে' এখনই গুরুজনেরা এই খবর দিয়াছেন। অতএব সুখে গমন হইতে পারে এমন একখানি রথ আনয়ন কর।

सीता। अज्जउत्त! तुह्मे हिं वि तहिं गन्तव्वं। (स)

रामः। अयि कठिनहृदये! एतदपि वक्तव्यमेव?। (ह)

सीता। तेण हि पिअं मे। (क्ष)

लक्ष्मणः। यथाज्ञापयत्यार्य्यः। इति निष्क्रान्तः।

रामः। प्रिये! इतो वातायनोपकण्ठे (१) मुहूर्त्तं सन्निविष्टौ भवावः। (क)

---

(स) आर्य्यपुत्र! युष्माभिरपि तस्मिन् गन्तव्यम्।

(क्ष) तेन हि प्रियं मे।

---

(स) सीतेति। इदानीं राजकार्य्यव्यग्रतया यदि रामः तत्र न यास्यतीति शङ्कया युष्माभिरपि तस्मिन् गन्तव्यमिति सीतया प्रार्थितमिति बोध्यम्।

(ह) राम इति। कठिनं हृदयं यस्याः सा तस्याः सम्बोधनम्। त्वां विहाय अहं स्थातुमर्हामीति येन हृदयेन आशङ्का कृता तत्तव हृदयं कठिनमेवेति भावः। एतदपि वक्तव्यमेव इति काकुः अपि तु कथमपि नेत्यर्थः। त्वया विना स्थातुमशक्यत्वात् तवैतत्-प्रार्थनाभावेऽपि अवश्यमेव त्वया सार्द्धमहं गमिष्यामि; सुतरां प्रार्थनावाक्यमिदं निष्प्रयोजनमिति भावः।

(क) राम इति। वातस्य अयनं गृहमध्ये प्रवेशो यस्मात् तत् वातायनं गवाक्षं तस्य उपकण्ठे समीपे। मुहूर्त्तम् अल्पकालमित्यर्थः सन्निविष्टौ शयितौ भवावः आवामिति शेषः।

---

(স) সীতা। আর্য্যপুত্র! আপনারও কিন্তু সেখানে যাইতে হইবে।

(হ) রাম। অয়ি! কঠোরহৃদয়ে! ইহাও কি বলিতে হইবে?

(ক্ষ) সীতা। তবেই আমার প্রীতিকর বটে।

লক্ষ্মণ। আর্য্য যাহা আদেশ করেন। (এই বলিয়া চলিয়া গেলেন।)

(ক) রাম। প্রিয়ে! এই গবাক্ষের নিকটে কিছুকাল আমরা শয়ন করি।

---

(१) वातायनावर्त्तके इति पाठान्तरम्।

सीता। एव्वं भोदु. ओहोरिज्जामि क्खु, परिस्समजणिदाए णिद्दाए। (ख)

राम:। तेन हि निरन्तरमवलम्बस्व मामत्र शयनाय। (ग)

जीवयन्निव ससाध्वसश्रम-
स्वेदविन्दुरधिकण्ठमर्प्यताम्।
बाहुरैन्दवमयूखचुम्बित-
स्यन्दिचन्द्रमणिहारविभ्रम: ॥३४॥

(ख) एवं भवतु, अपक्रिये खलु परिश्रमजनितया निद्रया।

(ख) सीतेति। एवं भवतु वातायनसमीपे आवयो: शयनं भवतु इत्यर्थ:। परिश्रम: चित्रदर्शने दण्डायमानत्वेन य आयासस्तज्जनितया निद्रया अपक्रिये अपहृता आकृष्टाऽस्मीत्यर्थ:।

(ग) राम इति। तेन हि निद्राकर्षणेनैव हेतुना। अत्र अस्मिन् वातायनोप-कण्ठे निर्न विद्यते अन्तरमवकाशो विभागो यस्मिन् कर्म्मणि तद्गाढ़मित्यर्थ: यथा स्यात्तथा मामवलम्बस्व धारय।

केन प्रकारेणावलम्बे इत्याह जीवयन्निति। साध्वसं चित्रे राक्षसादिदर्शनाद्भयं श्रम: दण्डायमानत्वेन चित्रदर्शनादायास: तयोर्ये स्वेदविन्दव: भयपरिश्रमाभ्यामुत्पन्ना घर्म्मविन्दवस्तै: सह वर्त्तमान इति ससाध्वसश्रमस्वेदविन्दु: अतएव इन्दोश्चन्द्रस्य इम इति ऐन्दवास्तैर्मयूखै: किरणै: चुम्बित: मिलित:, अतएव स्यन्दी जलस्रावी यश्चन्द्र-मणिहार: चन्द्रकान्तमणिमाला तस्य विभ्रम इव विभ्रमो विलासो यस्य स तथोक्त:,

(খ) সীতা। ইহাই হউক; পরিশ্রমজনিত নিদ্রা আমাকে আকর্ষণ করিতেছে।

(গ) রাম। তবেই এখানে শয়ন করিবার জন্য আমাকে গাঢ়ভাবে অবলম্বন কর।

तथा कारयन् सानन्दम् । प्रिये ! किमेतत् ! । (घ)

विनिश्चेतुं शक्यो (१) न सुखमिति वा दुःखमिति वा
प्रमोहो (२) निद्रा वा किमु विषविसर्पः किमु मदः ।
तव स्पर्शे स्पर्शे मम हि परिमूढ़ेन्द्रियगणो
विकारश्चैतन्यं भ्रमयति च सम्मीलयति च (३) ॥३५॥

---

जीवयन्निव नितान्तशीतलतया मामुच्छ्वासयन्निव स्थितः बाहुभुजः, अधिकण्ठं मम गलदेशे अर्प्यतां स्थाप्यतां त्वयेति शेषः ।

अत्र लुप्तोपमालङ्कारः जीवयन्निवेति क्रियोत्प्रेक्षया सङ्कीर्णः ।

अधिकण्ठमिति विभक्त्यर्थे अव्ययीभावः ।

चन्द्रकरस्पर्शे चन्द्रकान्तमणेर्जलं स्रवतीति प्रवादः ।

रथोद्धता वृत्तम्—"रान्नराविह रथोद्धता लगा"विति लक्षणात् ॥३४॥

(घ) तथेति । तथा कारयन् स्वकीयगलदेशे सीताबाहुमर्पयन् रामः सानन्दमाहेत्यन्वयः । एतत् कण्ठे तव बाहुस्थापनात् परम् अनुभूयमानम् अवस्थान्तरं किं कीदृशं जातमिति शेषः ।

जातमवस्थान्तरमेव विवृणोति विनिश्चेतुमिति । इतिशब्देन सीतास्पर्शजनितो रामस्य तदानीन्तनो भाव उच्यते, तेनायमर्थः । इति तव स्पर्शजनितो वर्त्तमानो मदीयो भावः, सुखं विनिश्चेतुं न शक्यः सुखत्वेन निर्णेतुं न शक्यते सम्यगनुभवसामर्थ्याभावादिति भावः । वा अथवा इति एष भावः, दुःखं विनिश्चेतुं न शक्यः अन्तःकरण-

---

ভয় ও পরিশ্রমে ঘর্ম্মবিন্দুসমন্বিত এবং চন্দ্রকিরণস্পৃষ্ট বলিয়া জলস্রাবী চন্দ্রকান্তমণিমালার ন্যায় বিলাসশালী ও আমার যেন জীবনদাতা তোমার বাহু, আমার কণ্ঠদেশে সমর্পণ কর ॥৩৪॥

(ঘ) ( তাহা করাইয়া, আনন্দের সহিত ) প্রিয়ে ! এ কি ! ।

---

(१) शक्यो इति क्वापि पाठः । (२) प्रबोध इति पाठभेदः ।

(३) भ्रमयति समुन्मीलयति च इति पाठान्तरम् ।

प्रतिकूलवेदनीयस्यैव दुःखपदार्थत्वात् एतद्भावस्य तु सर्वदैवाभिलाषणीयत्वेन अन्तःकरण-प्रतिकूलवेदनीयत्वाभावादिति भावः। वा अथवा एष भावः, प्रमोहो विनिश्चेतुं न शक्यः, प्रमोहत्वेन अज्ञानत्वेनापि निर्णेतुं न शक्यत इत्यर्थः 'सीतास्पर्शजन्योऽयं भावः' इति तात्त्विकज्ञानादिति भावः। वा किंवा अयं भावः, निद्रा विनिश्चेतुं न शक्यः निद्रात्वेनापि निर्णेतुं न शक्यत इत्यर्थः; युगपत् सर्वेन्द्रियविश्रामो हि निद्रा, अर्थात्तत्र कस्यापीन्द्रियस्य वृत्तिर्नास्ति, अत्र तु त्वगिन्द्रियग्राह्यस्पर्शानुभवादिति भावः। किमुशब्दो विकल्पे। अयं भावः विषविसर्पो विनिश्चेतुं न शक्यः; विषजनितविसर्पाख्यरोगविशेषत्वेनाप्यवधारयितुं न शक्यत इत्यर्थः, वेदनानुभवादिति भावः। तथा अयं भावः, मदो मद्यपानजनित-मोहविशिष्टानन्दोऽपि विनिश्चेतुं न शक्यः, मद्यपानाकरणादिति भावः। निश्चयाभावे कारणमाह तवेति। हि यस्मात्, तव स्पर्शे स्पर्शे प्रतिस्पर्शे परिमूढः स्वस्वविषयग्रहणासमर्थ इन्द्रियगणो मनःप्रभृतीनीन्द्रियाणि यस्मिन् स तथोक्तः मनसो विषयग्रहणासामर्थ्ये अन्येषामिन्द्रियाणां सुतरामसामर्थ्यादिति भावः। विकारः अन्यथाभावः अवशत्वमिति यावत्। मम चैतन्यम् अनुभवशक्तिं भ्रमयति अस्थिरयति च, सम्मीलयति मुद्रयति विलोपयति चेति यावत्। तव स्पर्शजनितविकारे सति क्वचित् मम चैतन्यम् अस्थिरं सत् किमपि निश्चेतुं न शक्नोति, क्वचित्तु विलुप्तमेव स्यादिति निष्कर्षः।

अत्र पूर्वार्द्धे स्पर्शजनितायामवशतायां सुखादीनां संशयात् तस्य च निश्चयाभावात् शुद्धसन्देहालङ्कारः। चतुर्थपादे च एकविकाररूपकर्त्तृकारकस्य भ्रमयति सम्मीलयतीति क्रिययोरनेकयोरन्वयात् दीपकञ्चेत्यनयोः परस्परमनपेक्षस्थितेः संसृष्टिः।

शिखरिणी वृत्तम् ॥३५॥

---

তোমার স্পর্শজনিত আমার এই অবস্থা—কি সুখ, না দুঃখ, না মোহ, না নিদ্রা এবং বিষজনিত বিসর্পরোগ, না মত্ততা ; ইহার কিছুই নিশ্চয় করিতে পারিতেছি না। কারণ, তোমার প্রত্যেক স্পর্শে আমার এমন এক বিকার উৎপন্ন হইতেছে যে, সমস্ত ইন্দ্রিয়ই স্ব স্ব কার্য্যে অক্ষম হইয়া পড়িতেছে ; তাহাতে ঐ বিকার আমার অনুভব শক্তিকে অস্থিরও করিতেছে, লুপ্তও করিতেছে ॥৩৫॥

सीता । विहस्य । थिरप्पसादा तुम्हे, इदो दाणिं किमवरं । (ङ)

रामः । म्लानस्य जीवकुसुमस्य विकाशनानि
सन्तर्पणानि सकलेन्द्रियमोहनानि ।
एतानि ते सुवचनानि सरोरुहाक्षि ! (१)
कर्णामृतानि मनसश्च रसायनानि ॥२६॥

---

(ङ) स्थिर प्रसादा यूयम्, इत इदानीं किमपरम् ।

---

(ङ) सीतेति । यूयं त्वमित्यर्थः गुरुत्वाद्बहुवचनम् । स्थिरो निश्चलः प्रसादोऽनुग्रहो येषां ते स्थिरप्रसादाः । इतः अस्मात् कारणात् इदानीम् अपरं प्रियवाक्यभिन्नं किं वक्तव्यमित्यर्थः । अनुग्रहकारिणो हि अनुगृहीतं प्रति सर्वदैव प्रियं वदन्तीति भावः ।

म्लानस्येति । हे सरोरुहाक्षि ! हे पद्मलोचने ! एतानि ते तव सुवचनानि मधुरवाक्यानि म्लानस्य सांसारिकाशेषक्लेशैः शुष्कप्रायस्य जीवो जीवनमेव कुसुमं तस्य विकाशनानि प्रफुल्लताजनकानि, सन्तर्पणानि सम्यक्तृप्तिकराणि, सकलेन्द्रियमोहनानि सर्वेषामिन्द्रियाणाम् अवशतासम्पादकानि श्रवणं प्रत्येव एकाग्रतया अन्येषामिन्द्रियाणां कार्य्याभावादिति भावः । कर्णामृतानि कर्णयोरमृतवत् प्रीतिजनकानि, तथा मनसश्च रसायनानि औषधविशेषवत् बलकराणि उत्साहवर्द्धकानीत्यर्थः ।

अत्र जीवकुसुमस्येति निरङ्गं केवलरूपकम्, अन्यत्र तु निरङ्गं मालारूपकमित्यनयोः सङ्करः ।

तथा एतानि ते सुवचनानीत्यनेन समाप्तत्वात् पुनः कर्णामृतानीत्यनेन आत्तत्वात् समाप्तपुनरात्ततादोषः ; स च चतुर्थपादं तृतीयपादस्थाने पठित्वा चतुर्थपादस्थाने 'वाक्यान्यमूनि मधुराणि सरोरुहाक्षि !' इति पाठेन समाधेयः । रसायनमाह भावप्रकाशे—

---

(ঙ) সীতা। ( হাস্য করিয়া ) আমার উপরে আপনার নিশ্চল অনুগ্রহ ; সুতরাং ইহা ভিন্ন এখন আর কি বলিবেন।

---

(१) एतानि तानि वचनानि सरोरुहाक्ष्या इति क्वापि पाठः ।

সীতা। প্রিয়ংবদ! এহি সংবিসহ্ম (১)। ইতি শয়নায় সমন্ততো নিরূপয়তি। (চ)

রামঃ। কিমন্বেষ্টব্যম্। (ছ)

আবিবাহসময়াদ্‌গৃহে বনে
শৈশবে তদনু যৌবনে পুনঃ।
স্বাপহেতুরনুপাশ্রিতোঽন্যয়া
রামবাহুরুপধানমেষ তে ॥৩৭॥

(চ) প্রিয়ংবদ! এহি সংবিশাবঃ।

"যজ্জরাব্যাধিবিধ্বংসি বয়সঃ স্তম্ভকং তথা।
চক্ষুষ্যবৃংহণং বৃষ্যং ভেষজং তদ্রসায়নম্ ॥"

বসন্ততিলকা বৃত্তম্ ॥৩৬॥

(চ) সীতেতি। অতীবপ্রিয়োক্তিকরত্বাৎ রামস্য প্রিয়ংবদ ইতি সম্বোধনম্। সংবিশাবঃ স্বপিবঃ। সমন্ততঃ সর্বতঃ। নিরূপয়তি অন্বিষ্যতি।

(ছ) রাম ইতি। কিমন্বেষ্টব্যং কিং বিচেতব্যং তবাবশ্যকপদার্থস্য ময়ৈব সম্পাদনীয়ত্বাৎ তব কিমপ্যন্বেষ্টব্যং নাস্তীত্যর্থঃ।

উপধানমেবান্বিষ্যতীতি বিবিচ্যাহ আবিবাহেতি। বিবাহসময়াৎ আ, বিবাহকালাদারভ্য ন তু তৎপূর্বমিত্যর্থঃ শৈশবে বাল্যকালে গৃহে, পুনস্তদনু তৎপশ্চাৎ যৌবনে কালে

রাম। হে পদ্মনয়নে! তোমার এই মধুর বাক্যগুলি, ম্লান জীবন-পুষ্পের বিকাশজনক, সম্যক্ তৃপ্তিকারক এবং সমস্ত ইন্দ্রিয়ের মোহজনক এবং কর্ণে অমৃতস্বরূপ ও মনের রসায়নস্বরূপ ॥৩৬॥

(চ) সীতা। প্রিয়ংবদ! আসুন, শয়ন করি। (এই বলিয়া শয়নের জন্য চারিদিকে অন্বেষণ করিতে লাগিলেন।)

(ছ) রাম। কি অন্বেষণ করিতে হইবে?।

(১) সংবিশ্ব ইতি পাঠান্তরম্।

सीता। निद्रां नाटयन्ती। अत्थि एदं अज्जउत्त ! अत्थि एदं।

इति स्वपिति। (ज)

रामः। कथं प्रियवचना वक्षसि प्रसुप्तैव। निर्वर्ण्य सस्नेहम्। (झ)

इयं गेहे लक्ष्मीरियममृतवर्त्तिर्नयनयो-
रसावस्याः स्पर्शो वपुषि बहुलश्चन्दनरसः।

(ज) अस्तीदम् आर्य्यपुत्र ! अस्तीदम्।

---

वने स्वापहेतुः शयनीपकरणम् अन्यया स्त्रिया अनुपाश्रितः अनवलम्बितः केवलं त्वयैवाव-लम्बित इति न ते परिहरणीय इति भावः। एष रामबाहुः ते तव उपधानम् उपबर्हः 'बालिस' इति यस्य प्रसिद्धिः आसीदिति शेषः। अतएवेदानीमपि स एव बाहुरुपधान-मस्तु इति भावः।

अत्र गृहवनयोः शैशवयौवनयोश्च अनुक्रमेणान्वयात् यथासंख्यं तथा बाहौ आरोप्य-माणस्य उपधानत्वस्य प्रकृतशयनीपयोगितया परिणामश्चालङ्कारः अनयोरङ्गाङ्गिभावेन सङ्करः।

"उपधानन्तूपबर्हः" इत्यमरः। रथोद्धता वृत्तम् ॥३७॥

(ज) सीतेति। तव बाहुः इदं मम उपधानमस्तीत्यर्थः। इति स्वीकरोमि स्वपिमि च तवैवेति भावः। इति पूर्वोक्तमुक्त्वेत्यर्थः स्वपिति रामबाहाविति शेषः।

(झ) राम इति। शयितजनबाहुपरिशयने वक्षसोर्योगात् वक्षसि शयनं भवतीति वक्षसि प्रसुप्तैवेत्युक्तम्।

---

বিবাহের সময় হইতে বাল্যকালে গৃহে, তাহার পর আবার যৌবন-কালে বনে ( তোমার ) শয়নের উপকরণস্বরূপ এবং অন্য রমণীকর্ত্তৃক অনাশ্রিত রামের এই বাহুই তোমার উপাধান ( বালিস ) ॥৩৭॥

(জ) সীতা। ( নিদ্রা অভিনয় করতঃ ) ইহা আছে, আর্য্যপুত্র ! ইহা আছে। ( এই বলিয়া শয়ন করিলেন। )

(ঝ) রাম। প্রিয়ভাষিণী বক্ষের উপর শয়ন করিলেনই। ( দেখিয়া স্নেহের সহিত ),

अयं कण्ठे बाहुः शिशिरमसृणो मौक्तिकसरः
किमस्या न प्रेयो यदि परमसह्यस्तु विरहः (१) ॥३८॥

प्रविश्य प्रतीहारी । देव ! उवत्थिदो । (ज)

(ज) देव ! उपस्थितः ।

इयमिति । इयं सीता गेहे गृहे लक्ष्मीः कमला, तथा इयं नयनीयचक्षुषोः अमृतवर्त्तिः सुधामयी तूलिका कज्जलादिलिपनार्था, असौ अनुभूयमानः अस्याः सीतायाः स्पर्शः वपुषि देहे बहुलः प्रचुरः चन्दनरसः चन्दनद्रवः तद्वत् सुशीतल इत्यर्थः । तथा अयं कण्ठे गले न्यस्त इति शेषः, बाहुः भुजः शिशिरमसृणः हिमवत् स्निग्धः मौक्तिकसरः मुक्तामाला, तद्वत् आनन्दकर इत्यर्थः । सुतराम् अस्याः सीतायाः सम्बन्धि किं वस्तु न प्रेयः प्रियतमम् अपि तु सर्वमेव प्रियतमम् ; तु किन्तु परं केवलं विरहो विच्छेदः असह्यः अतीवदुःखकरत्वात् सोढुमशक्यः । यदिशब्दः सम्भावनायाम्, एतत् सर्वं सम्भाव्यत इत्यर्थः ।

अत्र प्रथमपादे गेहनयनरूपविषयभेदेन एकस्याः सीताया अनेकधोल्लेखात् उल्लेखालङ्कारः, तत्र च भेदेऽभेदाध्यवसायमूलातिशयोक्तियोगो ज्ञेयः । द्वितीयतृतीयपादयोः समासाभावेऽपि "मुखं तव कुरङ्गाक्षि ! सरोजमिति नान्यथे"तिवत् रूपकद्वयम् ; तथा किमस्या न प्रेय इति वाक्यं प्रति पूर्वेषां त्रयाणां वाक्यानां हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गम् ; तथा प्रियतमायाः सीताया अप्रियतमविरहोत्पत्तेर्विषमालङ्कारश्चेत्येतेषां निरपेक्षस्थितेः संसृष्टिः ।

"यदि (व्य) पक्षान्तरम् । सम्भावना" इति शब्दकल्पद्रुमः । शिखरिणी वृत्तम् ॥३८॥

ইনি গৃহে লক্ষ্মী, ইনি নয়নযুগলে অমৃতের তূলী, ইঁহার এই স্পর্শ, শরীরে প্রচুর চন্দনের রস এবং কণ্ঠদেশে এই বাহু, হিমের ন্যায় স্নিগ্ধ মুক্তার হার। সুতরাং ইঁহার কোন্ বস্তু প্রিয়তম নহে ; কিন্তু বিরহই কেবল অসহ্য ॥৩৮॥

(१) यदि पुनरसह्यो न विरह इति पाठान्तरम् ।

रामः। अये! कः?।

प्रती। आसण्णपरिचारओ देवस्स दुम्मुहो। (ट)

रामः। स्वगतम्। शुद्धान्तचारी दुर्म्मुखः, स मया पौरजानपदानपसर्पितुं प्रयुक्तः। प्रकाशम्। आगच्छतु। (ठ)

---

(ट) आसन्नपरिचारको देवस्य दुर्म्मुखः।

---

(ञ) प्रविश्येति। प्रतीहारी अन्तःपुरद्वाररक्षिका काचित् स्त्री।
"द्वारस्थिता च प्रतीहारी"ति मेदिनी।

उपस्थित इत्यनेन वक्ष्यमाणदुर्म्मुख इत्यस्यान्वयात् उपस्थितो दुर्मुख इति वाक्यं भवेदित्यभिप्रेत्य प्रतीहार्य्या देव उपस्थित इत्युक्तम्। किन्तु पूर्वश्लोकस्थ 'विरह' इत्यनेन सह 'उपस्थित' इत्यस्यान्वयसम्भवेन "सीताया विरह उपस्थित" इति वाक्यात् आसन्नसीताविरहसूचनादिकं पताकास्थानमिदम्। तथा चोक्तं साहित्यदर्पणे—

"द्व्यर्थो वचनविन्यासः सुश्लिष्टः काव्ययोजितः।
प्रधानार्थान्तरापेक्षी पताकास्थानकं परम्॥"

(ट) प्रतीति। देवस्य भवतः। आसन्नो निकटवर्त्ती सन् परिचरति सेवते इत्यासन्नपरिचारकः। 'खानसामा' इति यस्य भाषा। दुष्टम् अप्रियभाषणेन निन्दितं मुखं यस्य स दुर्म्मुखः दुर्म्मुखनामा कश्चित् जनः। एष तु जन्मक्लीवः कृतक्लीवो वा विश्वस्तो वृद्धश्चान्तःपुरकिङ्कर आसीदिति मन्तव्यम्। अन्यथा अन्तःपुरकिङ्करत्वं परचित्तपरिज्ञानाय प्रेषणञ्च न स्यात्।

(ठ) राम इति। शुद्धान्तचारी अन्तःपुरस्थायी। पौरजानपदान् अयोध्यावासिनः तत्प्रदेशवासिनश्च जनान् अपसर्पितुं पर्य्यटितुम् अनुरक्ता विरक्ता वा, निन्दाकारकाः प्रशंसाकारका वा जना इति परीक्षितुमित्यर्थः प्रयुक्तः प्रेरितः। इति शिरश्चालनेन स्मृतिः।

---

(ঞ) প্রতীহারী। (প্রবেশ করিয়া) দেব! উপস্থিত হইয়াছে।
রাম। ওরে! কে?।
(ট) প্রতীহারী। আপনার সন্নিহিত সেবক দুর্ম্মুখ।

प्रतीहारी निष्क्रान्ता ।

प्रविश्य **दुम्मुंखः ।** स्वगतम् । **हा ! कधं सीदादेइए ईरिसं अचिन्तणिज्जं जणाववादं देवस्स कधइस्सं ? । अहवा णिओओ क्खु ईरिसो मन्दभाअस्स ।** (ड)

**सीता ।** उत्स्वप्नायते । **हा अज्जउत्त ! (१) कहिं सि ? ।** (ढ)

(ड) हा ! कथं सीतादेव्या ईदृशमचिन्तनीयं जनापवादं देवस्य कथयिष्यामि ? । अथवा नियोगः खलु ईदृशो मन्दभागस्य ।

(ढ) हा आर्य्यपुत्र ! कस्मिन्नसि ? ।

---

(ड) प्रविश्येति । देवस्य समीप इति शेषः । मन्दभागस्य अल्पभाग्यस्य ममेति शेषः । ईदृशः खलु नियोगः सकलवृत्तान्तं विदित्वा स यथायथं ममान्तिके वक्तव्यः एवमेवादेशोऽस्तीत्यर्थः । सुतरां रामस्याग्रहातिशये सीतापवादो वक्तव्य एवेति सज्जनस्यापवादप्रकाशात् मन्दमेव भाग्यं ममेति भावः ।

(ढ) सीतेति । उत्पन्नः स्वप्नो यस्याः सा उत्स्वप्ना सा इवाचरतीति उत्स्वप्नायते स्वप्ने प्रलपतीत्यर्थः । निद्रितावस्थायां विषयानुभवः स्वप्नः ।

---

(ঠ) রাম। ( স্বগত ) অন্তঃপুরচারী দুর্ম্মুখ; তাহাকে আমি পুরবাসী ও দেশবাসীদিগের নিকট বিচরণ করিবার জন্য পাঠাইয়াছিলাম। ( প্রকাশ্যে ) আসুক।

( প্রতীহারী চলিয়া গেল। )

(ড) দুর্ম্মুখ। ( প্রবেশ করিয়া স্বগত ) হায়! সীতাদেবীর এইরূপ অভাবনীয় লোকাপবাদ কি প্রকারে রাজার নিকট বলিব?। অথবা, মন্দভাগ্যের ( আমার ) উপরে আদেশই এইরূপ।

(ঢ) সীতা। ( স্বপ্নে বলিতে লাগিলেন ) হা আর্য্যপুত্র! আপনি কোথায়?।

---

(१) सौम्य इत्यधिकः पाठः क्वापि ।

रामः। अये! सैवेयं रणरणकदायिनी चित्रदर्शनाद्विरह-भावना देव्याः स्वप्नोद्वेगं करोति। सस्नेहमङ्गमस्याः परामृशन्। (ग)

अद्वैतं सुखदुःखयोरनुगुणं सर्वास्ववस्थासु यत्
विश्रामो हृदयस्य यत्र जरसा यस्मिन्नहार्य्यो रसः।
कालेनावरणात्ययात् परिणते यत् स्नेहसारे स्थितं
भद्रं तस्य (१) सुमानुषस्य कथमप्येकं हि तत्प्राप्यते (२) ॥३८॥

(ग) राम इति। रणरणकदायिनी उद्वेगकारिणी। विरहभावना मम विच्छेद-चिन्ता। स्वप्नोद्वेगं स्वप्नेऽपि तादृशमेव विरहोद्वेगं करोतीत्यर्थः। दुश्चिन्ता जाग्रदवस्थायां यदर्थं कृता, स्वप्नेऽपि सा तद्दर्शयतीति रीतिः। अङ्गं परामृशन् अङ्गे हस्तं स्पर्शयन्।

ईदृक्परमपतिव्रतायाः सीताया निरन्तरं सुखन्तु नास्त्येव, किन्तु कथं वनवासादि-विविधदारुणक्लेश एवासीदिति विभाव्य भृशमनुतप्त आह अद्वैतमिति। यत् भार्य्यारूपं वस्तु, सुखदुःखयोरद्वैतम् अभिन्नमाश्रयं पत्युः सुखेन सुखी, दुःखेन च दुःखीत्यर्थः। तथा सर्वास्ववस्थासु सम्पत्सु विपत्सु च अनुगुणम् अनुकूलं न तु सम्पत्तावनुकूलं विपत्तौ तु प्रतिकूलमिति भावः। यत्र भार्य्यारूपे वस्तुनि हृदयस्य सांसारिकाशेषक्लेशभोग-परिश्रान्तस्य मनसः विश्रामः श्रमापनोदनं विषयान्तरक्लिष्टं मनः यत् प्राप्य हृष्यतीत्यर्थः यस्मिन् भार्य्यारूपे वस्तुनि जरसा वार्द्धक्येनापि रसोऽनुरागो न हार्य्यः न हर्त्तुं दूरीकर्त्तुं शक्यः, वार्द्धक्ये हि प्रायेणैवोत्साहादयो मनोवृत्तयो नश्यन्ति किन्तु भार्य्यायामनुरागो न नश्यतीति भावः। यत् भार्य्यारूपं वस्तु कालेन पुत्राद्युत्पत्तिप्रभृतिसमयेन आवरणस्य लज्जासङ्कोचादेरत्ययादपगमात् परिणते परिपक्वे स्नेहसारे स्नेहस्योत्कृष्टांशे स्थितं कामवृत्त्याद्यभावेन केवलाकृत्रिमप्रणयपात्रं भवतीत्यर्थः। तस्य सुमानुषस्य भार्य्यारूप-

(গ) রাম। ও! চিত্রদর্শনবশতঃ উদ্বেগকারিণী সেই বিরহচিন্তাই এই সীতাদেবীর স্বপ্নেও ভয় জন্মাইতেছে। (স্নেহের সহিত সীতার অঙ্গে হস্তামর্শন করতঃ)

(१) प्रेम इति क्वचित् पाठः। (२) प्रार्थ्यते इति पाठभेदः।

दुर्म्मुखः। उपसृत्य। जअदि जअदि देओ। (त)

रामः। ब्रूहि, यदुपलब्धम्। (थ)

दुर्म्मुखः। उवत्थुअन्ति देअं पोरजाणवदा, विसुमरिदा अह्मे महाराअदसरहस्स रामदेएण त्ति। (द)

(त) जयति जयति देवः।

(द) उपस्तुवन्ति देवं पौरजानपदाः, विस्मारिता वयं महाराजदशरथस्य रामदेवेनेति।

---

सज्जनस्य तत्प्रसिद्धम् एकं केवलं निरवच्छिन्नमिति यावत् भद्रं मङ्गलं कथमपि महाकष्टेनेत्यर्थः प्राप्यते पत्येति शेषः। क्वचित् कस्यचिज्जनस्य पत्नी जन्मान्तरीय-महातपःक्लेशादिना निरवच्छिन्नसुखिनी स्यात्, न तु सर्व्वेषाम्; सुतरां सीताया निरवच्छिन्नं सुखं नाभूदिति कृत्वा समानुशोचनमनर्थकमिति भावः।

अत्र भार्य्यायाः प्रियतमत्वस्थापनकार्य्यं प्रति बहुतरकारणोक्तेः समुच्चयोऽलङ्कारः। तथा अप्रस्तुतसुमानुषसामान्याभिधानात् प्रस्तुतस्त्रीरूपसुमानुषविशेषप्रतीतेरप्रस्तुतप्रशंसा, अनयोरङ्गाङ्गिभावेन सङ्करः।

द्वयोर्भावो द्विता, द्वितैव द्वैतं प्रज्ञादित्वात् स्वार्थे अण्, ततो नञ् समासः।

शार्दूलविक्रीड़ितं वृत्तम्—"सूर्य्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीड़ित"मिति लक्षणात्॥३९॥

(थ) राम इति। यदुपलब्धं ज्ञातं तद्ब्रूहीत्यर्थः।

---

যে বস্তু সুখ ও দুঃখের অভিন্ন আশ্রয় এবং সকল অবস্থাতেই অনুকূল; যেখানে পরিশ্রান্ত হৃদয়ের বিশ্রাম হয়, যাহার প্রতি অনুরাগকে বার্দ্ধক্যও হরণ করিতে পারে না এবং কালে লজ্জার আবরণের অভাব হইলে, যাহা অনুরাগের পরিপক্ক উৎকৃষ্ট অংশে অবস্থান করে; সেই সজ্জনের নিরবচ্ছিন্ন সেই মঙ্গলটী অতিকষ্টেই পাওয়া যায়॥৩৯॥

(ত) দুর্ম্মুখ। (নিকটে যাইয়া) মহারাজের জয় হউক।

(থ) রাম। বল, যাহা জানিয়াছ।

रामः । अर्थवाद एषः, दोषन्तु मे कञ्चित् कथय, येन स प्रतिविधीयते । (ध)

दुर्म्मुखः । सास्रम् । सुणादु देवो । कर्णे एवमेवम् । (न)

---

(न) शृणोतु देवः ।

---

(द) दुर्म्मुख इति । उपस्तुवन्ति प्रशंसन्ति । रामदेवेन देववत् प्रभावशालिना रामेण वयं महाराजदशरथस्य विस्मारिताः विस्मृतिं प्रापिताः । दशरथादधिकगुणवान् राम इत्यर्थः, उत्कृष्टवस्तुलाभे पूर्वलब्धनिकृष्टवस्तुविस्मृतिः स्वाभाविकीति भावः ।

महाराजदशरथस्येति "स्मृत्यर्थकर्म्मणी"ति कर्म्मणि षष्ठी ।

(ध) राम इति । अर्थस्य गुणस्य वादः कथनमित्यर्थवादः । प्रशंसेत्यर्थः । "अर्थवादः प्रशंसा चे"ति हलायुधः । केचित्तु प्रशंसानिन्दान्यतरस्य वादः कथनमर्थवादः । तथा च पूर्वमीमांसार्थसंग्रहे लौगाक्षिभास्करः—

"प्राशस्त्यनिन्दान्यतरपरं वाक्यमर्थवादः ।" इति ।

तथा चार्थवादः प्राधान्येन द्विविधः—स्तुत्यर्थवादो निन्दार्थवादश्चेति । अत्र तु एष "विस्मारिता" इत्यादिना त्वयोक्तः अर्थवादः स्तुत्यर्थवादः प्रशंसाकथनमित्यर्थः । प्रतिविधीयते प्रतिकारः क्रियते विनाश्यत इति यावत् ।

(न) दुर्म्मुख इति । 'कर्णे एवमेव'मिति कविवचनम् । एवमेवमित्यस्य दुर्मुख-पाठ्यत्वे तु 'एव्वं एव्व'मिति स्यात् । कर्णे कर्णसमीपे मुखमुपनीय एवमेवम् ईदृशमीदृशं दुर्म्मुखो वदतीत्यर्थः । दुर्म्मुखेन निभृतमुक्तवचनन्त्वेतत् । यथा—"अस्माकं राजा राम एतावान् सरलबुद्धिर्यत् लङ्कायामेकाकिनी युवतिः सीतावस्थितेति दोषावश्यम्भावसम्भावनाया-

---

(দ) দুর্ম্মুখ। পুরবাসিগণ ও দেশবাসিগণ, মহারাজকে প্রশংসা করে যে, রাজা রামচন্দ্র আমাদের চিত্ত হইতে মহারাজ দশরথকে বিস্মৃত করাইয়া দিয়াছেন।

(ধ) রাম। এটা ত প্রশংসাবাদ; কিন্তু কোনও দোষ বল, যাহাতে তাহার প্রতিবিধান করা যায়।

रामः । अहह ! तीव्रसंवेगो वाग्वज्रः । इति मूर्च्छति । (প)

दुर्म्मुखः । आस्ससदु देओ । (ফ)

रामः । आश्वस्य । (ब)

हा हा धिक् परगृहवासदूषणं यद्-
वैदेह्याः प्रशमितमद्भुतैरुपायैः ।
एतत्तत् पुनरपि दैवदुर्विपाका-
दालर्कं विषमिव सर्वतः प्रसृप्तम् ॥४०॥

(फ) आश्वसितु देवः ।

मपि तेनासंशयमेव गृहीता सुतरामन्याय्यमेत"दित्यादिरूपं किञ्चित् । स्वाभाविकस्वरेणैतदुच्चारणे यदि कश्चिदन्यः शृणुयात्, सीता वा जागरिता शृणुयात्तदा महान् दोषः स्यादिति निभृतोक्तिज्ञापनार्थमुक्तं कर्णे इत्यादि ।

(प) राम इति । अहहेति महाखेदसूचकमव्ययम् । तीव्रो महान् सम्वेगो यस्य सः । दुर्म्मुखोक्तवाक्यमेव वज्रम् इति रूपकालङ्कारः । वज्रवत् महाप्रहारेण अतिदुःसहवेदनाकरत्वादिति भावः ।

(ब) राम इति । आश्वस्य लब्धसंज्ञो भूत्वेत्यर्थः । आङ् पूर्वश्वसधातोरनुज्ञायां प्रयोग एव । मूर्च्छारोगस्य महौषधमिति नाटककवयो मन्यन्ते स्मेति निर्णीयते । तथा च प्रायेण सर्वत्र आश्वसिहि आश्वसितु इत्युक्तिमात्रमेव मूर्च्छापन्नश्चैतन्यमापद्यत इति दृश्यते ।

हा हेति । वैदेह्याः सीतायाः यत् परगृहवासदूषणम् एकाकिन्या लङ्कावस्थानजनितदोषसंशयः अद्भुतैरुपायैः आश्चर्य्यैरग्निपरीक्षादिभिः साधनैः प्रशमितं दूरीकृतम्, तदेतत्

(ন) দুর্ম্মুখ। (অশ্রুপাতের সহিত) মহারাজ শ্রবণ করুন। (কর্ণে এইরূপ এইরূপ বলিল।)

(প) রাম। অহহ! তীব্রবেগশালী এই বাক্য-বজ্র। (এই বলিয়া মূর্চ্ছিত হইলেন।)

(ফ) দুর্ম্মুখ। মহারাজ আশ্বস্ত হউন।

तत् किमत्र मन्दभाग्यः करोमि। विमृश्य सकरुणम्। अथवा, किमन्यत्। (भ)

सतां केनापि कार्य्येण लोकस्याराधनं व्रतम्।
यत् पूरितं (१) हि तातेन माञ्च प्राणांश्च मुञ्चता ॥४१॥

परगृहवासदूषणं दैवदुर्विपाकात् दुरदृष्टपरिणामात् अलर्कस्य चिप्तकुक्कुरस्य इदम् इत्यालर्कं विषमिव पुनरपि सर्वतः सर्वाङ्गेषु सर्वासु दिक्षु च प्रसृप्तं व्याप्तम्। यथा चिप्तकुक्कुरदंशविषं तदानीं मन्त्रौषधादिना उपशमितमपि कालान्तरे सर्वाङ्गेषु व्याप्तं सदुत्पद्यते, तद्वदग्निपरीक्षादिना सीतायाः परगृहवासदोषसंशयस्तदानीमपनीतोऽपि इदानीं सर्वदेशेषु व्याप्त इत्यर्थः।

अत्रोपमालङ्कारः। प्रहर्षिणी वृत्तम् ॥४०॥

(भ) तदिति। तत्तस्मात्। प्राणाधिकसीतापरित्यागस्य कर्त्तुमशक्यत्वात् सीतारक्षणं च दारुणलोकापवादस्य दुःसहत्वात् एतयोर्मध्ये किं करोमीत्यर्थः। विमृश्य विविच्य। अन्यत् किं करोमीत्यर्थः। लोकसन्तोषाय सीतामेव त्यजामीति भावः।

सीतापरित्यागे युक्तिमाह सतामिति। सतां साधूनां केनापि अनिर्वचनीयेन दुष्करेणापीत्यर्थः कार्य्येण कर्म्मणा लोकस्य जनस्य आराधनं सन्तोषः व्रतं व्रतवदवश्यकर्त्तव्यमित्यर्थः। हि तथाहि, तातेन बहुदर्शिना राज्ञा दशरथेन माञ्च प्राणांश्च मुञ्चता त्यजता सता यत् व्रतं पूरितं परिसमापितम्। प्रतिज्ञाभङ्गे पापं मिथ्यावादितया प्रजानामविश्वासे-

(ব) রাম। (আশ্বস্ত হইয়া) হায়! হায়! সীতার পরগৃহবাসের যে দোষ, অদ্ভুত উপায়ে প্রশমিত করিয়াছিলাম; দৈবদুর্বিপাকবশতঃ পুনরায় তাহা, ক্ষিপ্ত কুকুরের ন্যায় সকল দিকে এই বিস্তৃত হইয়া পড়িয়াছে ॥৪০॥

(ভ) সুতরাং, মন্দভাগ্য আমি এ বিষয়ে কি করি?। (বিবেচনা করিয়া, শোকের সহিত) অথবা, আর কি করিব।

(१) पुजितमिति क्वापि पाठः।

सम्प्रत्येव भगवता वशिष्ठेन सन्दिष्टम् । अपि च, (म)

यत् सावित्रैर्दीपितं भूमिपालै:
लोकश्रेष्ठै: साधु शुद्धं चरित्रम् ।
मत्सम्बन्धात् कश्मला किंवदन्ती
स्याच्चेदस्मिन् हन्त ! धिङ् मामधन्यम् ॥४२॥

नासन्तोषश्च स्यादिति विविच्य तातेन लोकानां सन्तोषायैव स्वहं निर्वासित: तच्छोकेन प्राणांश्च त्यक्ता: ; सुतरां मया लोकसन्तोषाय ततोऽल्पतरसीतापरित्याग एव कर्त्तव्य इति भाव: ।

अत्र विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यास:, तथा मुञ्चतेत्येकया क्रियया मां प्राणांश्च इत्यनयोरन्वयात् तुल्ययोगिता चेत्यनयोरङ्गाङ्गिभावेन सङ्करालङ्कार: ॥४१॥

(म) सीतापरित्यागस्य कर्त्तव्यतायां युक्त्यन्तरमाह सम्प्रतीति । सम्प्रत्येव न तु बहुपूर्वम्, येन विस्मृति: स्यादिति भाव: । सन्दिष्टम् अष्टावक्रमुखेन "युक्त: प्रजानामनुरञ्जने स्यात्" इत्यनेन सर्वं विहायापि लोकानुरागवर्द्धनं कर्त्तव्यमिति वाचिकं प्रेरितमित्यर्थ: । सुतरां वशिष्ठोपदेशोऽपि सीतापरित्यागपक्षमेव प्रमाणयतीति भाव: । अपि च सीतापरित्यागे अन्या च युक्तिरस्तीत्यर्थ: ।

तद्युक्त्यन्तरमाह यदिति । सवितु: सूर्य्यस्यापत्यानीति सावित्रा: तै: सूर्य्यवंशीयै: लोकश्रेष्ठै: भूमिपालै: यत् शुद्धं निर्म्मलं चरित्रं साधु सम्यक् दीपितं प्रकाशितमासीत्, चेत् यदि, मत्सम्बन्धात् मम सम्पर्कात् अस्मिन् तस्मिन् चरित्रे कश्मला मलिना निन्दारूपेत्यर्थ: किंवदन्ती जनश्रुति: स्यात्, हन्त खेदे । तर्हि अधन्यं पापिनं मां धिक् निन्दामीत्यर्थ: । सीतारक्षणे निन्दारूपजनश्रुतेरनिवार्य्यत्वात् सीतापरित्याग एवावश्यं कर्त्तव्य इति भाव: ।

যে কোন কার্য্যের দ্বারা, লোকের সন্তোষ করা, সজ্জনের ব্রত; পিতৃদেব আমাকে এবং প্রাণকে পরিত্যাগ করিয়া যে ব্রত পূর্ণ করিয়াছিলেন ॥৪১॥

(ম) ভগবান্ বশিষ্ঠ, এখনই খবর দিয়া পাঠাইয়াছেন। আরও,

हा देवि ! देवयजनसम्भवे ! हा स्वजन्मानुग्रहपवित्रीकृत-वसुन्धरे ! हा जनकवंशनन्दिनि ! हा पावकवशिष्ठारुन्धती-प्रशस्तशीलशालिनि ! हा रामैकजीविते ! हा महारण्यवास-प्रियसखि ! हा तातप्रिये ! हा स्तोकप्रियवादिनि ! कथमेवं-विधायास्तवायमीदृशः परिणामः । (य)

"कश्मलं मलिनी विषु" इति हेमचन्द्रः ।

शालिनी वृत्तम्—"मात्तौ गौ चेच्छालिनी वेदलोकै"रिति लक्षणात् ॥४२॥

(य) एवं परित्यागस्यावश्यकर्त्तव्यत्वनिश्चयेन शोकोदयाद्विलपति हा देवीति। देवा इज्यन्ते पूज्यन्तेऽस्मिन्निति देवयजनं यज्ञस्थलं तस्मात् सम्भवति या तत्सम्बोधनम्। अशुक्रशोणितजाततया वीजदोषोऽपि ते नास्तीति भावः। स्वस्या आत्मनो जन्मैवानुग्रहो दया तेन पवित्रीकृता वसुन्धरा पृथिवी यया सा। तथा च ब्रह्मवैवर्त्ते—

"शतजन्मपुण्यवतां गृहे जाता पतिव्रता ।
पतिव्रताप्रसूः पूता जीवन्मुक्तः पिता तथा ॥"

ईदृशपतिव्रतारत्नत्यागी दारुणदुःखकर इति भावः। जनकवंशनन्दिनि ! जनक-कुलानन्दकारिणि ! धार्म्मिकस्यानन्दो धर्म्मेणैवोत्पद्यत इति महाधर्म्मवती त्वमिति भावः। पावको वह्निः। पावकवशिष्ठारुन्धतीभिः प्रशंसितं यत् शीलं स्वभावः तेन शालत इति सा सीताचरित्रम् अग्निना परीक्षाकाले वशिष्ठारुन्धतीभ्यान्तु सर्वदैव प्रशंसितमिति रामायणे द्रष्टव्यम्। पावकः सर्वदेवमयः, वशिष्ठस्त्रिकालज्ञो ब्रह्मर्षिः, अरुन्धती च पतिव्रताशिरोमणिः अतिसत्यवादिभिरमीभिर्यतस्त्वं प्रशंसिता, सुतरां त्वं परमपतिव्रता, नास्त्यत्र संशय इति भावः।

राम एव एकमद्वितीयं जीवितं जीवनं यस्याः सा, हा राममयजीवन इत्यर्थः सुतरामीदृश्याः परित्यागात् महती कृतघ्नता स्यादिति भावः। महारण्यवासप्रियसखि !

---

সূর্য্যবংশীয় লোকশ্রেষ্ঠ রাজগণ, জগতে যে নির্ম্মল চরিত্র সম্যক্‌রূপে প্রকাশ করিয়া গিয়াছেন, আমার সম্বন্ধবশতঃ সেই চরিত্রে যদি দূষিত জনশ্রুতি হয় ; হায় ! তবে পাপিষ্ঠ আমাকে ধিক্ ॥৪২॥

त्वया जगन्ति पुण्यानि त्वय्यपुण्या जनोक्तयः ।
नाथवन्तस्त्वयालोकास्त्वमनाथा विपत्स्यसे ॥४३॥

महावनवासेऽपि सहवर्त्तिनि ! या महारण्यवासे मम शुश्रूषार्थम् अनावश्यकत्वेऽपि स्वयमेव सहचारिणी बभूव, तामिवाहमेकाकिनीं महारण्ये विसर्जयामीति मत्तो जगत्यां कृतघ्नो नास्तीति भावः । हा तातप्रिये ! पितृप्रीतिकारिणि ! सुतरां तव परित्यागेन स्वर्गस्थो महागुरुः पितापि मां प्रति महाविरक्तो भविष्यतीति भावः । स्तोकमल्पं प्रियं प्रीतिकरञ्च वदितुं शीलं यस्याः सा, तेन त्वं ममातीव प्रीतिपात्रभूतासि, तेन तव परित्यागो हृदयविदारक इति भावः ।

अत्र गद्यभागे परिकरालङ्कारः—"उक्तिर्विशेषणैः साभिप्रायैः परिकरो मत" इति लक्षणात् ।

एवंविधाया असाधारणनानागुणशालिन्या इत्यर्थः । अयं मया क्रियमाणः परित्यागरूपः । ईदृशो दारुण इत्यर्थः । परिणामः शेषफलम् ।

अत्रांशे विभावनाविशेषोक्त्योः सन्देहसङ्करालङ्कारः ।

त्वयेति । त्वया करणभूतया जगन्ति भुवनानि पुण्यानि पादरजःस्पर्शादिना पवित्रभूतानि, किन्तु त्वयि अपुण्याः अपवित्राः दुष्टा इत्यर्थः जनोक्तयः "लङ्कायामेकाकिनी स्थिता सीता कथं चरित्ररक्षणक्षमा आसी"देवम्भूता जनप्रवादा वर्त्तन्त इति शेषः । तथा त्वया लोका नाथवन्तः अधिपतिशालिनः लक्ष्मीरूपत्वात् त्वमेव जनानां नाथा ईश्वरीत्यर्थः, किन्तु त्वम् अनाथा प्रभुशून्या रक्षकरहितेति यावत्, सती विपत्स्यसे वने

(য) হা দেবি! যজ্ঞভূমিসমুৎপন্নে! হা জনকবংশানন্দকারিণি! নিজের জন্মগ্রহণরূপ অনুগ্রহদ্বারা তুমি পৃথিবীকে পবিত্র করিয়াছ; অগ্নিদেব, বশিষ্ঠদেব ও অরুন্ধতীদেবী তোমার চরিত্রের প্রশংসা করিয়াছেন; একমাত্র রামই তোমার জীবন; মহারণ্যবাসের সময় তুমি আমার সহচারিণী ছিলে, তুমি পিতৃদেবের প্রীতিকারিণী ছিলে এবং অল্প অথ চ প্রিয় বাক্য বলিতে। তুমি এইরূপ ছিলে, তথাপি তোমার এরূপ পরিণাম হইল কেন!।

दुर्मुखं प्रति। ब्रूहि लक्ष्मणम्, एष ते नूतनो राजा रामः।
समाज्ञापयति। कर्णे एवमेवम्। (र)

विपदं प्राप्स्यसि। रामेण मनसि सीताया निर्वासनस्य निश्चितत्वात् "अनाथा विपत्स्यसे" इत्युक्तमिति बोध्यम्।

अत्र पूर्वार्द्धे लोकचरित्रवैचित्र्यादिरोधसमाधानम्, परार्द्धे च ईश्वरेच्छयेति विरोधाभासोऽलङ्कारः।

तथा 'त्वयि त्व'मित्यनयोः परं तुशब्दः किन्तुशब्दो वा भेदज्ञापनार्थं वाच्यः, किन्तु नोक्त इति वाच्यानभिधानदोषः ; स च 'त्वया जगन्ति पुण्यानि वाचोऽपुण्यास्तु ते नृणाम्' इति पाठेन 'त्वन्त्वनाथा' इति पाठेन च समाधेयः।

पतिव्रतायाः पादरजःस्पर्शे पृथिव्याः पवित्रत्वे प्रमाणं यथा ब्रह्मवैवर्त्तपुराणम्—

"सतीनां पादरजसा सद्यः पूता वसुन्धरा।
पतिव्रतां नमस्कृत्य मुच्यते पातकान्नरः॥"

सीताया लक्ष्मीरूपत्वे प्रमाणं यथा पद्मपुराणम्—

"अथ लोकेश्वरी लक्ष्मीर्जनकस्य पुरे स्वतः।
शुभक्षेत्रे हलोत्खाते तारे चोत्तरफल्गुने॥" इत्यादि ॥४३॥

(र) दुर्मुखमिति। नूतनः अदृष्टपूर्वाश्रुतपूर्वकर्म्मा इत्यर्थः। य एवमग्निपरीक्षया निर्द्दोषतया निश्चिताम् आसन्नप्रसवाम् अभिन्नहृदयाम् एकान्तविश्वासकारिणीं परमप्रियतमां निर्वासयितुमर्हति, स नूतन एवेति भावः। इयन्तु गभीरविषादाक्षेपोक्तिः। कर्णे दुर्म्मुखस्य कर्णसमीपे मुखमुपनीय एवमेवमाहेत्यर्थः। तद्वचनन्तु यथा—"सम्प्रत्येव सीता पञ्चवटीदर्शनाय आग्रहं कृतवती, अतएव तत्प्रदर्शनच्छलेन रथेन तत्र नीत्वा विसर्ज्य द्रुतं निभृतञ्चागच्छ" इति इत्येव लक्ष्मणं ब्रूहीत्यर्थः।

अत्र "नितान्तनीचजातीयस्य कस्यचित् सामान्यकिङ्करस्य वचनविश्वासेन सीतापरित्यागो रामस्य विचारनैपुण्यशून्यताम् अवैधोपायेनाप्युत्पन्नयशःप्रियताञ्च प्रकटयति" इति केचि-

তোমাদ্বারা ত্রিজগৎ পবিত্র ; কিন্তু তোমার বিষয়ে লোকপ্রবাদ অপবিত্র এবং জগতের লোক তোমাদ্বারা নাথবান্ ; কিন্তু তুমি অনাথা অবস্থায় বিপন্ন হইবে ॥৪৩॥

दुर्म्मुखः। कधं दाणिं अग्गिपरिशुद्धाए गव्भपरिप्फुड़िद-पवित्त-रहुउलसन्ताणाए देईए दुज्जणवअणादो एव्वं अणज्जं अज्झवसिदं देवेण ?। (ल)

रामः। शान्तम्। कथं दुर्जनाः पौरजानपदाः। (व)

इक्ष्वाकुवंशोऽभिमतः प्रजानां
जातञ्च दैवाद्वचनीयवीजम्।

(ल) कथमिदानीम् अग्निपरिशुद्धाया गर्भपरिस्फुटितपवित्ररघुकुलसन्तानाया देव्या दुर्जनवचनादेवमनार्य्यमध्यवसितं देवेन ?।

---

दिदानीन्तनाः शिक्षितम्मन्याः समालोचका रामचरित्रे दोषमारोपयन्ति ; न तु जानन्ति ते, यत्, इदानीमिव तदानीं नासन् प्रायेण मिथ्यावादिनः, येन रामस्य दुर्म्मुखवचने संशयो भवेत्, अपि च सीताहरणस्य श्रुतत्वात् अग्निपरीक्षायाश्चाश्रुतत्वात् लोकापवादो रामेणानुमितोऽपीत्यलं पल्लवितेन।

(ल) दुर्म्मुख इति। गर्भे परिस्फुटितः प्रकाशितः पवित्रो रघुकुलसन्तानो यस्याः तस्याः गर्भिणीमरणसम्भवे गर्भनाशावश्यम्भावात् गुरुतरपातकमेतदिति भावः। अनार्य्यम् असाधु, अध्यवसितं निश्चितम् अत्यन्तासङ्गतमेतदिति भावः।

(व) राम इति। शान्तं विरतं भवतु इति शेषः प्रजां प्रति तव दुर्जन इति वाक्यं न वाच्यमित्यर्थः।

---

(র) ( দুর্ম্মুখের প্রতি ) লক্ষ্মণকে বল, তোমার এই নূতন রাজা রাম আদেশ করিতেছেন। ( কর্ণে এইরূপ এইরূপ। )

(ল) দুর্ম্মুখ। অগ্নিপরীক্ষায় যিনি বিশুদ্ধ বলিয়া প্রমাণিত হইয়াছেন এবং যাঁহার গর্ভে পবিত্র রঘুকুলসন্তান স্পন্দিত হইতেছে, সেই সীতাদেবীর প্রতি মহারাজ এখন দুর্জ্জনের বাক্যে এইরূপ অন্যায্য আচরণ আরম্ভ করিলেন কেন ?।

(ব) রাম। থাম। পুরবাসিগণ এবং দেশবাসিগণ দুর্জন হইবে কেন।

यच्चाद्भुतं कर्म्म विशुद्धिकाले
प्रत्येतु कस्तद्भुवि (१) दूरवृत्तम्? ॥৪৪॥

तद्गच्छ।

पौरजानपदानामदुर्जनत्वं प्रतिपादयितुमाह इक्ष्वाकिति। प्रजानाम् इक्ष्वाकुवंशः अभिमतः राजत्वेन अभीष्टः अतएव इक्ष्वाकुवंशीयं मां प्रति स्वभावतो विद्वेषवशात् अपवादं घोषयन्तीति न सम्भवतीति भावः। तर्हि कथमपवादं कुर्वन्तीत्याह, दैवात् दुरदृष्टवशात् वचनीयबीजं लङ्कायामेकाकिन्या अवस्थानरूपं निन्दाकारणं जातम्, सुतरां प्रकृष्टकारणं प्राप्यैव अपवदन्ति कथमन्यथा तदपवादविषयपरिहारः स्यादिति भावः।

अग्निपरीक्षया सीताचरित्रविशुद्धिं विश्वस्य अपवादान्निवर्त्तन्तामिति चेत्तत्राह, विशुद्धिकाले अग्निपरीक्षया निर्द्दोषत्वप्रतिपादनसमये यच्च अद्भुतं स्वयमग्निदेवेन सीतामङ्के निधाय तस्या निर्द्दोषत्वं मुखेनैव यत् प्रतिपादितं तादृशम् आश्चर्य्यं कर्म्म आसीदिति शेषः, दूरवृत्तम् अतिदूरवर्त्तिलङ्कायां जातं तत् कर्म्म भुवि पृथिव्यां को जनः प्रत्येतु विश्वसितु अपि तु कोऽपि नेत्यर्थः। दूरवृत्तस्य प्रत्यक्षाभावात् लोकपरम्परया श्रवणस्य तु प्रायेण वालीकत्वाच्च तदविश्वासो न दोषायेति भावः।

अत्र यतो दूरवृत्तम् अतः कः प्रत्येत्विति प्रत्ययाभावं प्रति दूरवृत्तत्वपदार्थस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गमुक्तार्थापत्तिश्चालङ्कारः।

अभिमत इति "ज्ञानुबन्धमती"त्यादिना वर्त्तमाने क्तः। प्रजानामिति "वर्त्तमानाधिकरणयोः सौवे" इति कर्त्तरि षष्ठी।

इन्द्रवज्रा वृत्तम् ॥৪৪॥

---

ইক্ষাকুবংশ, প্রজাদের অভিমত, কিন্তু দৈববশতই নিন্দার কারণ হইয়াছে। অগ্নিপরীক্ষাদ্বারা বিশুদ্ধি প্রমাণের সময়ে যে অদ্ভুত ঘটনা ঘটিয়াছিল, জগতের কোন্ লোক সেই দূরের ঘটনা বিশ্বাস করিবে? ॥৪৪॥

অতএব যাও।

---

(१) कस्तद्गतिमिति क्वापि पाठः।

दुर्म्मुखः । हा देइ ! । इति निष्क्रान्तः । (श)

रामः । हा कष्टम् ! अतिबीभत्सकर्म्मा नृशंसोऽस्मि संवृत्तः । (ष)

शैशवात् प्रभृति पोषितां प्रियां
सौहृदादपृथगाश्रयामिमाम् (१) ।
छद्मना परिददामि मृत्यवे
सौनिको गृहशकुन्तिकामिव ॥४५॥

(श) हा देवि ! ।

(ष) राम इति । अतिबीभत्सम् अकारणसद्भार्य्यापरित्यागात् अतिनिन्दनीयं कर्म्म यस्य स तथोक्तः । नृशंसः क्रूरः ।

नृशंसतां प्रति कारणमाह शैशवादिति । शैशवात् प्रभृति । बाल्यकालादवधि पोषितां पालितां प्रियां प्रीतिकरीं सौहृदात् प्रणयात् अपृथगाश्रयाम् एकस्थानस्थिताम् इमां सीतां सौनिकः पशुपक्षिमांसविक्रयकारी ( कषाइ इति यस्य प्रसिद्धिः ) गृहशकुन्तिकां गृहपालितपक्षिणीमिव छद्मना कपटतया मृत्यवे मरणाय परिददामि अर्पयामि । अनन्तहिंस्रसमाकुले महारण्ये निर्वासनात् मरणमस्या अवश्यम्भावीति परमप्रियतमाया ईदृशमरणसम्पादकादन्यः को नाम नृशंसोऽस्तीति भावः ।

अत्र पूर्णोपमालङ्कारः । तेनाहमतीव कदर्य्य इति ध्वन्यत इत्यलङ्कारेण वस्तुध्वनिः । सूनया प्राणिहिंसया संसृष्ट इति सौनिकः "तेन दीव्यती"त्यादिना इकन् । "वैतंसिकः सौनिकश्च मांसिकः कौठिकस्तथा" इति हेमचन्द्रः । रथोद्धता वृत्तम् ॥४५॥

(শ) দুর্ম্মুখ। হা দেবি!। ( এই বলিয়া চলিয়া গেল। )

(ষ) রাম। হায় কি কষ্ট! আমি অতিঘৃণিতকর্ম্মা নৃশংস হইয়াছি। বাল্যকাল হইতে প্রিয়াকে পোষণ করিয়াছি এবং প্রণয়বশতঃ যিনি ভিন্ন স্থানে থাকেন নাই; এখন কষাই যেমন গৃহপালিত পক্ষিণীকে

(१) अपृथगाश्रयामिमामिति पाठान्तरम् ।

तत् किमित्यस्पर्शनीयः पातकी देवीं दूषयामि (स)।

सीतायाः शिरः स्वैरमुन्नमय्य बाहुमाकर्षन्। (ह)

अपूर्वकर्म्मचाण्डालमयि मुग्धे ! विमुञ्च माम्।
श्रितासि चन्दनभ्रान्त्या दुर्विपाकं विषद्रुमम् ॥४६॥

(स) तदिति। अस्पर्शनीयः स्पर्शायोग्यः। पातकी अपतितभार्य्यापरित्यागेन पातित्यजनकपापवान्। देवीं सीतां देवीवत् सच्चरित्रामिति भावः। दूषयामि स्पर्शेन अपवित्रां पापिनीं वा करोमि।

अपतितपरित्यागी पातित्यमाह गौतमः—"ब्रह्महा-सुराप गुरुतल्पग-पितृमातृसुतत्यागि-पितृमातृयौनिसम्बन्धागस्तेननास्तिकनिन्दितकर्म्माभ्यासिपतिताऽत्याग्यपतितत्यागिनश्च पतिताः।"

पतितस्पर्शे स्नानमाह मनुः—

"दिवाकीर्त्तिमुदक्याञ्च पतितं सूतिकां तथा।
शवं तत्स्पृष्टिनञ्चैव स्पृष्ट्वा स्नानेन शुध्यति ॥"

पतितस्पर्शे तु तत्पापसंक्रममेवाह गरुड़पुराणम्—

"आलापाद्गात्रसंस्पर्शात् संवासात् सहभोजनात्।
आसनाच्छयनाद्यानात् पापं संक्रमते नृणाम् ॥"

(ह) सीताया इति। स्वैरं मन्दम् उन्नमय्य उत्थाप्य।

अपूर्वेति। अयि मुग्धे ! सरलबुद्धिशालिनि ! न तु सज्जनदुर्जनविवेकशालिनीत्यर्थः, अपूर्वः अदृष्टपूर्वोऽश्रुतपूर्वं इत्यर्थः कर्म्मणा कृतघ्नतानृशंसव्यवहारादिना कार्य्येण चाण्डालः, न तु जात्या चाण्डालः तं कृतघ्नतादिकर्म्मणा यद्यपि केचित् रत्नाकरादयः कर्म्मचाण्डाला आसन्, तथापि ईदृशभार्य्यापरित्यागात् कदर्य्यातिकदर्य्यः कर्म्मचाण्डालः कश्चिदपि नासीत् न वा वर्त्तत इति अपूर्वपदप्रयोगस्याभिप्रायः। मां विमुञ्च स्वयमेव

---

মৃত্যুর হাতে দান করে, আমিও সেইরূপ সেই প্রিয়তমাকে ছলক্রমে মৃত্যুর হাতে দিতেছি ॥৪৫॥

(স) অতএব অস্পৃশ্য পাতকী আমি কেন দেবীকে দূষিত করি।

(হ) ( ধীরে ধীরে সীতার মস্তক উত্তোলন করিয়া বাহু আকর্ষণ করতঃ )

उत्थाय। हन्त! विपर्य्यस्तः सम्प्रति जीवलोकः, अद्य पर्य्यवसितं जीवितप्रयोजनं रामस्य, शून्यमधुना जीर्णारण्यं जगत्, असारः संसारः, कष्टप्रायं शरीरम्। अशरणोऽस्मि, किं करोमि, का गतिः, क्व गच्छामि। अथवा—(घ)

---

परित्यज। कथमित्याह चन्दनभ्रान्त्या चन्दनतरुभ्रमेण दुष्टो विपाकः परिणामफलं मरणमित्यर्थः यस्य तं विषद्रुमं विषवृक्षं श्रितासि अवलम्बितवत्यसि। सत्पुरुषभ्रमेण अतिदुर्जनं मां पतित्वेन प्राप्तवतीत्यर्थः। सुतरां तत्परित्याग एव श्रेयानिति भावः।

अत्र वस्तुतश्चन्दनभ्रमेण विषवृक्षाश्रयाभावात् वाक्यार्थोऽसम्भवन् चन्दनभ्रमेण विषवृक्षाश्रय इव सत्पुरुषभ्रमेण अतिदुर्जनाश्रयः कृत इति बिम्बप्रतिबिम्बभावं बोधयतीति असम्भवद्वस्तुसम्बन्धा निदर्शना, तथा त्यागं प्रति विषवृक्षाश्रयस्य हेतुत्वात् कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासश्चेत्यनयोरङ्गाङ्गिभावेन सङ्करः॥४६॥

(घ) उत्थायेति। हन्त खेदे। जीवलोकः सजीवपदार्थः। विपर्य्यस्तः विपरीतः संवृत्तः। पूर्व्वं य एव लक्ष्मणादयो दासीदासादयश्च त्वया सहैकत्रावस्थाने परमस्नेहालाप-व्यवहारादिना उत्तरोत्तरवर्द्धमानसुखकरा आसन्, त एवेदानीं तवाभावेन तव स्मृतेरुत्थापकतया क्रमिकवर्द्धमानदुःखसाधका भवेयुरित्यर्थः। अद्य सीतापरित्यागदिने रामस्य जीवितप्रयोजनं जीवनोद्देश्यम् ऐहिकसुखमित्यर्थः पर्य्यवसितं परिसमाप्तम् इतः परं तव शोकेन सर्व्वदैव सर्व्वथा दुःखस्यैवावश्यम्भावादिति भावः। जीर्णारण्यं जीर्णं शुष्कविरलवृक्षप्रायम् अरण्यमिव जगत् भुवनं शून्यं शून्यमिवेत्यर्थः तव शोकजनित-दुःखस्यैव सर्व्वामोदनिवारकतया आश्वाससाधकपदार्थाभावादिति भावः। निविड़ारण्ये नवपत्रपल्लवदर्शनादिना कियानाश्वासः सम्भवति, शुष्कारण्ये तु विषाद एवेति ज्ञापनाय जीर्णपदं प्रयुक्तमिति बोध्यम्। न विद्यते सारो वरः उत्कृष्टपदार्थः सुखमिति यावत् यस्मिन् सः असारः संसारः जगत् सुखशून्यं जगदित्यर्थः। सीताभावेन सर्व्वस्यैव दुःखत्वादिति भावः। कष्टप्रायं दुःखबहुलम् एतेन किञ्चित् सुखमस्तीति विज्ञायते,

---

হে সরলে! আমি অপূর্বকর্ম্ম চণ্ডাল; আমাকে পরিত্যাগ কর। তুমি চন্দনভ্রমে দুষ্পরিণাম বিষবৃক্ষ আশ্রয় করিয়াছিলে॥৪৬॥

दुःखसंवेदनायैव रामे चैतन्यमर्पितम् (१)।
मर्म्मोपघातिभिः प्राणैर्वज्रकीलायितं स्थिरैः (२) ॥४७॥

हा अम्ब अरुन्धति! हा भगवन्तौ वशिष्ठविश्वामित्रौ!

---

तत्तु वैराग्येण वनवासादौ न तु गृह इति भावः। अशरणः रक्षकशून्योऽस्मि दारुणदुःखहस्तादिति भावः। का गतिरुपायः आश्वासं प्रतीति भावः। अथवा किंवा आश्वासोपायान्वेषणं निष्फलमित्यर्थः।

कुत इत्याह दुःखेति। दुःखसंवेदनायैव कष्टानुभवायैव रामे मयि चैतन्यम् अर्पितं निहितं विधिनेति शेषः। मर्म्म जीवस्थानम् उपहन्तुं प्रहर्त्तुं शीलं येषां तैः स्थिरैः अपसारयितुम् इष्यमाणैरपि निश्चलैः प्राणैः वज्रकीलं वज्रनिर्म्माणसाधनवस्तुनिर्म्मितशङ्कुः (पेरेक इति यस्य प्रसिद्धिः) तेन इव आचरितमिति वज्रकीलायितम्। नितान्तकठिनतया वज्रकीलं यथा कथमप्यपसारयितुं न शक्यते, तथा दारुणदुःखयातनयापि प्राणा न यान्तीत्यर्थः। प्राणानां सद्भाव एव मर्म्मपीड़ा स्यान्न तु प्राणाभाव इति प्राणा एव मर्म्मोपघातिन इति भावः।

अत्र पूर्वार्द्धे एवशब्दो ध्रुवशब्दसमानार्थः, तेन वाच्या भावाभिमानिनी क्रियोत्प्रेक्षा, द्वितीयार्द्धे त कचा साद्दश्यबोधनादुपमालङ्कारः अनयोस्तिलतण्डुलवत् संसृष्टिः।

"मर्म्म जीवस्थान"मिति राजनिर्घण्टः ॥४७॥

---

(ক) (উঠিয়া) হায়! জীবলোক এখন উল্‌টিয়া গেল, আজ রামের জীবনের প্রয়োজন শেষ হইল, জীর্ণারণ্যের ন্যায় জগৎ এখন শূন্য, সংসার অসার এবং শরীর দুঃখবহুল। আমি রক্ষকশূন্য হইলাম; কি করি, উপায় কি, কোথায় যাই। অথবা—

বিধাতা, দুঃখভোগের জন্যই রামের দেহে চৈতন্য দিয়াছিলেন। আর মর্ম্মপীড়াদায়ক অথ চ নিশ্চল প্রাণ, বজ্রশঙ্কুর ন্যায় আচরণ করিতেছে ॥৪৭॥

---

(१) आहितमिति क्वापि पाठः। (२) ध्रुवैरिति पाठान्तरम्।

हा भगवन् पावक! हा देवि भूतधात्रि! हा तात जनक! हा तात! हा मातरः! हा प्रियसख महाराज सुग्रीव! हा सौम्य हनूमन्! हा परमोपकारिन् लङ्काधिपते विभीषण! हा सखि त्रिजटे! दूषिताः स्थ, परिभूताः स्थ रामहतकेन। अथवा को नामाहमेतेषामाह्वाने?। (क)

ते हि मन्ये महात्मानः कृतघ्नेन दुरात्मना।
मया गृहीतनामानः स्पृश्यन्त इव पाप्मना॥४८॥

(क) हा अम्बेति। पावक! वह्ने! भूतधात्रि! पृथिवि! तात! दशरथ! मातरः! कौशल्यादयः! त्रिजटा नाम काचित् राक्षसी लङ्कावस्थानकाले सीतायास्तत्त्वावधानकारिणी सकलभयनिवारिणी सान्त्वनाकारिणी आसीत्, परमोपकारित्वात्तस्याः सम्बोधनम्। दूषिताः स्थ, परिभूता अवमानिताः स्थ, सीतापरित्यागेन यूयमिति शेषः। तथा च सर्वैरेव युष्माभिः नितान्तनिर्म्मलचरित्रतया सीतायाः प्रशंसा कृता, इदानीं तस्या एव चरित्रदोषापवादेन परित्यागात् मया सर्वेषामेव मिथ्यावादित्वदोषः प्रतिपादितः, वाक्याविश्वासेन अवमानना च कृतेति भावः। हतः पातित्यजनकसद्भार्य्यापरित्यागपापेन नष्टप्रायः, हत एव हतकः कुत्सायां कप्रत्ययः, रामश्चासौ हतकश्चेति रामहतकः अभिधानाद्विशेषणस्य परनिपातः। आह्वाने सम्बोधने अहं कः अपि तु कोऽपि न, अनधिकारीत्यर्थः।

अत्र हेतुमाह ते हीति। हि यस्मात् कृतघ्नेन सीतायाः प्रशंसोद्धारादिना महोप-

(क) হা মাতঃ অরুন্ধতি! হা ভগবন্ বশিষ্ঠ ও বিশ্বামিত্র! হা ভগবন্ অগ্নিদেব! হা দেবি পৃথিবি! হা পিতঃ জনক! হা পিতঃ! (দশরথ!) হা মাতৃগণ! হা প্রিয়সুহৃদ মহারাজ সুগ্রীব! হা সৌম্যমূর্ত্তি হনূমন্! হা মহোপকারী লঙ্কাধিপতি বিভীষণ! হা সখি ত্রিজটে! নিকৃষ্ট রামকর্ত্তৃক তোমরা সকলেই দূষিত হইলে এবং অপমানিত হইলে। অথবা, আমি ইঁহাদের আহ্বান করিতে কে?।

योऽहम्—

विश्रम्भादुरसि निपत्यलब्धनिद्रा-
मुन्मुच्य प्रियगृहिणीं गृहस्य शोभाम्।
आतङ्कस्फुरितकठोरगर्भगुर्वीं
क्रव्याद्भ्यो बलिमिव निर्घृणः क्षिपामि ॥४९॥

कारिणां तेषां दोषावमानाभ्यामपकारिणामित्यर्थः। दुरात्मना अपतितभार्य्यात्यागात् पापात्मना मया गृहीतानि उच्चारितानि नामानि येषां ते तथोक्ताः ते अरुन्धत्यादयो महात्मानः पुण्यवन्तः पाप्मना पापेन स्पृश्यन्ते सम्बध्यन्त इव इत्यहं मन्ये।

अत्र भावाभिमानिनी वाच्या क्रियोत्प्रेक्षालङ्कारः, तथा पापस्पर्शं प्रति मया गृहीत-नामत्वं हेतुरिति पदार्थहेतुकं काव्यलिङ्गञ्चेत्यनयोरङ्गाङ्गिभावेन सङ्करः।

कृतघ्नमाह प्रायश्चित्ततत्त्वधृतस्कन्दपुराणम्—

"कृतस्य दोषं वदति सकामान्न करोति यः।
न स्मरेच्च कृतं यस्तु आश्रमान् यस्तु दूषयेत्।
सर्व्वांस्तानृषिभिः सार्द्धं कृतघ्नानब्रवीन्मनुः॥"

कृतघ्नस्य प्रायश्चित्तानपनेयपापत्वमपि तत्रैवोक्तम्, यथा—

"ब्रह्मघ्ने च सुरापे च चौरे च गुरुतल्पगे।
निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः॥" ॥४८॥

विश्रम्भादिति। निर्घृणः निर्द्दयः विश्रम्भात् "अयं मम प्रियतमः पति"रिति विश्वासात् उरसि वक्षसि निपत्य स्थित्वा लब्धनिद्रां गृहस्य शोभां लक्ष्मीस्वरूपाम् आतङ्केन कयाचित् शङ्कया आतङ्कजनितदीर्घश्वासेनेत्यर्थः स्फुरितः कम्पितः कठोरः पूर्णो यो गर्भस्तेन गुर्वीं भारवती तां प्रियगृहिणीं प्रियतमां भार्य्याम् उन्मुच्य उत्तोल्य क्रव्याद्भ्यो

তাঁহারা সকলেই মহাত্মা; আর আমি কৃতঘ্ন ও দুরাত্মা। সুতরাং আমি তাঁহাদের নাম উচ্চারণ করিলে তাঁহারা যেন পাপস্পৃষ্ট হন, ইহা আমি মনে করি ॥৪৮॥

रामः। इयमपि प्रियं नः, तदनुभूयतामुग्रस्य तपसः परिपाकः। (ध)

यत्रानन्दाश्च मोदाश्च यत्र पुण्याश्च (१) सम्पदः।
वैराजा नाम ते लोकास्तैजसाः सन्तु ते ध्रुवाः (२) ॥१२॥

---

राजदण्डस्य पापनाशकत्वमभ्युदयहेतुत्वञ्चाह मनुः—

"राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः।
निर्म्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा॥"

वसन्ततिलका वृत्तम् ॥११॥

(ध) राम इति। इयमपि ब्राह्मणशिशोर्जीवनं तव च दिव्यदेहप्राप्तिः एतद्द्वयमपीत्यर्थः। यद्यपि ब्राह्मणशिशोर्जीवनमेव हत्याया मुख्यमुद्देश्यमासीत् तथापि प्रसङ्गसिद्धापि शम्बूकस्य दिव्यदेहप्राप्तिः प्रीतिजनिकैव सतां पराभ्युदयदर्शनेन प्रीतेरेव सम्भवादिति भावः। तत् तस्मात्। उग्रस्य दारुणस्य दुष्करस्येत्यर्थः। परिपाकः फलम्। शूद्रस्यैव तपस्यनधिकारः, किन्तु देवयोनिविशेषस्य शम्बूकस्य तपस्यधिकार आसीदेव सुतरां तस्य फलमपि सम्भवत्येवेति बोध्यम्।

किन्तत् फलमित्याह यत्रेति। यत्र येषु लोकेषु आनन्दाः ब्रह्मप्रीतयः, मोदा नानाविधसम्भोगाः, यत्र येषु च पुण्याः पवित्रा न तु मर्त्त्यवत् दुर्व्यवहारादिना कलुषिताः सम्पदः धनजनादिसम्पत्तयः सन्तीति शेषः। विराजो ब्रह्मण इमे इति वैराजा ब्रह्मसम्बन्धीयाः

---

আপনি যম হইতেও অভয় দিয়া থাকেন; আপনি আমার প্রাণদণ্ড করিলে, এই শিশু জীবিত হইয়াছে, আমারও এই সম্পদ হইয়াছে। এই শম্বূক, মস্তকদ্বারা আপনার চরণে নমস্কার করিতেছে। সজ্জনের সংসর্গ হইতে উৎপন্ন মৃত্যুও উদ্ধার করে ॥১১॥

(ধ) রাম। দুইই আমার প্রিয়; অতএব ভয়ঙ্কর তপস্যার পরিণাম অনুভব কর।

---

(१) पुण्याभिसम्भवाः इति क्वापि पाठः। (२) शिवा इति पाठभेदः।

शम्बूकः । युष्मत्पादप्रसादोपाय एष महिमा, किमत्र तपसा (१) । अथवा महदुपकृतं तपसा । (न)

अन्वेष्टव्यो यदसि भुवने भूतनाथः शरण्यो
मामन्विष्यन्निह वृषलकं योजनानां शतानि ।
क्रान्त्वा प्राप्तः, स इह तपसां (२) सम्प्रसादोऽन्यथा चेत्
क्वायोध्यायाः पुनरुपगमो दण्डकायां वने वः ? ॥१३॥

नाम्ना च वैराजाः तैजसाः आलोकमयास्ते लोका ब्रह्मलोका इत्यर्थः ते तव ध्रुवा नित्या अक्षया इति यावत् सन्तु भवन्तु । त्वं चिरमेव ब्रह्मलोके तिष्ठेत्यर्थः । एतदेव तव तपसः फलम्, न त्वयमाशीर्वादो वरो वेति भावः ॥१२॥

(न) शम्बूक इति । युष्माकं पादस्य चरणस्य प्रसादः अनुग्रह एव उपायः कारणं यस्य स तथोक्तः, एष मम ब्रह्मलोकलाभरूपः महिमा माहात्म्यम् । अत्र महिम्नि विषये तपसा किं कृतमित्यर्थः । ममेयं ब्रह्मलोकप्राप्तिसम्भावना तवानुग्रहादेव न तु तपसेत्यर्थः ।

तपसा कृतं महान्तमुपकारमाह अन्वेष्टव्य इति । भुवने जगति भूतानां प्राणिनां नाथः पतिः तथा शरणेषु रक्षकेषु साधुः शरण्यः रक्षकश्रेष्ठ इत्यर्थः अतएव अन्वेष्टव्यः सर्वेषां साक्षात्कर्त्तव्यस्त्वं वृषलकं कुत्सितशूद्रं माम् अन्विष्यन् विचिन्वन् सन् योजनानां शतानि क्रान्त्वा विलङ्घ्य इह अस्मिन् महारण्ये यत् प्राप्तोऽसि आगतोऽपि, स तवागमः तपसां मत्कृतानामित्यर्थः सम्प्रसादः अनुग्रहः अनुग्रहजन्य इत्यर्थः । चेत् यदि अन्यथा तपःकृतानु-

যেখানে ব্রহ্মানন্দ এবং নানাবিধ ভোগ আছে, আর যেখানে পবিত্র সম্পদ রহিয়াছে; আলোকময় বৈরাজনামে সেই লোক, তোমার চিরস্থায়ী হউক ॥১২॥

(ন) শম্বূক। আমার এই প্রভাব, আপনার চরণের অনুগ্রহেই হইয়াছে; সুতরাং এ বিষয়ে তপস্যা কি করিয়াছে? অথবা তপস্যা গুরুতর উপকার করিয়াছে।

(१) न तु तपसः फलमिति पाठान्तरम् । (२) तपस इति पाठभेदः ।

रामः। किं नाम दण्डकेयम्?। सर्वतोऽवलोक्य। आं। (प)

स्निग्धश्यामाः क्वचिदपरतो भीषणाभोगरूक्षाः
स्थाने स्थाने मुखरककुभो भ्राङ्कृतैर्निर्झराणाम् (१)।
एते तीर्थाश्रमगिरिसरिद्गर्त्तकान्तारमिश्राः (२)
संदृश्यन्ते परिचितभुवो दण्डकारण्यभागाः ॥१४॥

ग्रहजन्यो न स्वीक्रियेतेत्यर्थः तदा अयोध्याया निजराजधान्याः सकाशात् दण्डकायां वने दण्डकारण्ये वो युष्माकं क्व कस्मिन् निमित्ते पुनः द्वितीयवारं हेतुं विनेत्यर्थः उपगम आगमनं भवेदिति शेषः कथमपि नेत्यर्थः।

अत्र "विपुलेन सागरशयस्य कुक्षिणे"त्यादिसाहित्यदर्पणोदाहृतवत् एकस्मिन् रामे अन्वेषणकर्म्मत्वकर्तृत्वयोर्विरूपयोः सङ्घटनाद्विषमालङ्कारः, तथा वधोद्देशजनितरामगमने तपोऽनुग्रहजन्यत्वमध्यवसितमिति भेदे अभेदाध्यवसायरूपा अतिशयोक्तिश्चेत्यनयोः संसृष्टिः।

"शरणं गृहरक्षित्रो"रित्यमरः।

शरण्य इति साधावर्थे यप्रत्ययः। वृषलकमिति कुत्सायां कप्रत्ययः।

"दण्डकायां वने" इति "अम्बिका कलत्र"मित्यादिवदुभयोरप्यजहल्लिङ्गत्वात् लिङ्गवैषम्येऽपि विशेष्यविशेषणता। मन्दाक्रान्ता वृत्तम् ॥१३॥

(प) राम इति। आंशब्दो निश्चये, दण्डकैवेयमित्यर्थः।

"आं ज्ञाननिश्चयस्मृत्यो"रिति मेदिनी।

---

আপনি প্রাণিগণের অধিপতি রক্ষকশ্রেষ্ঠ; সুতরাং সকলের অন্বেষণের যোগ্য হইয়াও, শূদ্র আমাকে অন্বেষণ করতঃ, শতযোজন অতিক্রম করিয়া যে এই স্থানে উপস্থিত হইয়াছেন; ইহা আমার তপস্যারই অনুগ্রহ। তাহা যদি না হইত, তবে অযোধ্যা হইতে দণ্ডকারণ্যে আপনার আগমন হইবে কি জন্য?॥১৩॥

(প) রাম। এই কি দণ্ডকারণ্য?। (সকল দিকে দৃষ্টিপাত করিয়া) ও!

---

(१) द्राङ्कृतैः, ध्याङ्कृतैरिति पाठान्तरद्वयम्। (२) गर्भकान्तारमिश्रा इति पाठान्तरम्।

शम्बूकः। दण्डकेवेयम्, अत्र किल निवसता देवेन—(फ)

स्निग्धेति। क्वचित् कस्मिंश्चिद्विभागे स्निग्धाः नवपत्रपल्लवशालित्वात् तैलाक्ता इव, श्यामा श्यामलाश्च, तथा अपरतः अन्यस्मिन् विभागे भीषणो य आभोगः परिपूर्णता विस्तीर्णतेति यावत् तेन रूक्षाः कर्कशाः, स्थाने स्थाने पदे पदे निर्झराणां पार्वत्यप्रस्रवणानां झाङ्कतैः झामितिशब्दैः मुखराः शब्दायमानाः ककुभो दिशो येषु ते, तीर्थानि मुनिगण-सेवितजलानि, आश्रमाः मुनीनां तपोवनानि, गिरयः पर्वताः, सरितो नद्यः, गर्त्ताः विलानि, कान्ताराः दुर्गमाः पन्थानः तैर्मिश्रा युक्ताः परिचिताः पूर्वं ज्ञाताः भुवः स्थानानि येषु ते, एते सम्मुखवर्त्तिनः दण्डकारण्यभागाः दण्डकारण्यस्य प्रदेशाः संदृश्यन्ते अवलोक्यन्ते।

अत्र स्वभावोक्तिरलङ्कारः। भयानको रसः।

"आभोगः परिपूर्णता।" "दिशस्तु ककुभः काष्ठाः।" "निपानागमयोस्तीर्थमृषिजुष्टजले गुरौ।" "महारण्ये दुर्गपथे कान्तारः पुंनपुंसक"मिति चामरः।

इक्ष्वाकुराजपुत्रो दण्डनामा शुक्राचार्य्यकन्याम् अरजानाम्नीं बलेन धर्षितवान्, शुक्राचार्य्यस्तच्छ्रुत्वा "अद्यावधि सप्ताहमध्ये तव राज्यं स्थावरजङ्गमात्मकं सर्वमेव नाशं प्राप्स्यति, त्वञ्च मरिष्यसी"ति शप्त्वा तन्निकटवर्त्तिनो जनानवोचत्—"सत्वरं यूयमस्मात् राज्यादपसृत्य तिष्ठते"ति ततश्च दण्डराज्यं अरण्यतया परिणतम्, जनाश्च तस्माद्देशादपसृत्य स्थिताः तेन दण्डराज्यं दण्डकारण्यम्, तेषां जनानां निवासस्थानञ्च जनस्थानमित्युच्यते इति रामायणवार्त्तात्रानुसन्धेया।

मन्दाक्रान्ता वृत्तम् ॥१४॥

(फ) शम्बूक इति। देवेन भवतेत्यर्थः।

---

সেই দণ্ডকারণ্যের অংশগুলিইত এই দেখিতেছি, কোনদিকে স্থানগুলি স্নিগ্ধ ও শ্যামবর্ণ, অপরদিকে ভয়ঙ্কর বিস্তীর্ণতাবশতঃ রূক্ষ, স্থানে স্থানে পার্ব্বত্য প্রস্রবণের 'ঝাং ঝাং' শব্দে দিক্‌সকল মুখরিত, কোন কোন স্থান মুনিসেবিত জল, মুনিগণের আশ্রম, পর্ব্বত, নদী, গর্ত্ত ও মহারণ্যমিশ্রিত এবং ইহার ভূভাগ আমার পূর্ব্বপরিচিত ॥১৪॥

चतुर्द्दशसहस्राणि रक्षसां भीमकर्म्मणाम्।
त्रयश्च दूषणखरत्रिमूर्द्धानो रणे हताः (१) ॥१५॥

येन सिद्धक्षेत्रेऽस्मिन् जनस्थाने मादृशानामपि भीरुजानपदानामकुतोभयः (२) सञ्चारो जातः। (ब)

रामः। न केवलं दण्डकेयम्, (३) जनस्थानमपि?। (भ)

शम्बूकः। वाढ़म्, एतानि सर्वभूतलोमहर्षणान्युन्मत्त-

चतुरिति। भीमं भयङ्करं कर्म्म हिंसादिकं येषां तेषां रक्षसां राक्षसानां चतुर्द्दश-सहस्राणि तथा तेषां नेता दूषणः खरः त्रिमूर्द्धा त्रिशिराः एते त्रयश्च रणे हताः व्यापादिताः। त्रयो मूर्द्धानो यस्येति विग्रहे "द्वित्रिभ्यां मूर्द्धन्" इति राजादित्वात् षत्प्रत्ययेन "त्रिमूर्द्ध" इत्येवं प्रयोगः स्यात्। तथा च भट्टौ—"रघुतनयमुपाययौ त्रिमूर्द्ध" इति सुतरामत्र च्युत-संस्कारतादोषः, स च "त्रिमूर्द्धाः समरे हता" इति पाठेन समाधेयः।

पथ्यावक्त्रं वृत्तम् ॥१५॥

(ब) येनेति। येन दूषणखरादिराक्षसवधेन। सिद्धानाम् अणिमादिसिद्धानां क्षेत्रे स्थाने। न विद्यते कुतोऽपि भयं यस्मिन् सः अकुतोभयः, सञ्चारो गमनागमनम्।

(भ) राम इति। अत्रापिशब्दः प्रश्ने। सीतासमेतपर्य्यटनस्थानदर्शनेन गभीर-विषादोक्तिरियं रामस्य।

(फ) शম্বূক। ইহা দণ্ডকারণ্যই। আপনি এই বনে থাকিয়া, ভয়ঙ্কর কার্য্যকারী চতুর্দ্দশ সহস্র রাক্ষস এবং খর, দূষণ ও ত্রিশিরা এই তিন জনকে নিহত করিয়াছিলেন ॥১৫॥

(ব) যাহাতে, এই সিদ্ধক্ষেত্র জনস্থানে আমাদের মত ভীরু দেশবাসিদিগেরও অকুতোভয়ে বিচরণ হইতেছে।

(ভ) রাম। ইহা কেবল দণ্ডকারণ্য নহে, জনস্থানও?।

(१) निपातिता इति क्वापि पाठः। (२) भीरुजनानामिति पाठभेदः। (३) न केवलं दण्डका, किन्तु न केवलं दण्डकैव, न केवलं दण्डकारण्यमिति पाठान्तरम्।

चण्डश्वापदकुलसङ्कुलगिरिगह्वराणि जनस्थानपर्य्यन्तानि दीर्घारण्यानि दक्षिणां दिशमभिवर्त्तन्ते। तथाहि—(म)

निष्कूजस्तिमिताः क्वचित् क्वचिदपि प्रोच्चण्डसत्त्वस्वनाः
स्वेच्छासुप्तगभीरभोगभुजगश्वासप्रदीप्ताग्नयः।
सीमानः प्रदरोदरेषु विलसत् स्वल्पाम्भसो यास्वयं
तृष्यद्भिः प्रतिसूर्य्यकैरजगरस्वेदद्रवः पीयते ॥१६॥

(म) शम्बूक इति। वाढं सत्यम्, दण्डकैवेयं जनस्थानञ्चेदमिति स्वीकरोमीत्यर्थः "भृशप्रतिज्ञयोर्वाढ़"मिति ढान्तनानार्थे अमरः "प्रतिज्ञा अङ्गीकार" इति तट्टीका च। सर्वेषां भूतानां प्राणिनां लोमहर्षणानि भयेन रोमाञ्चजनकानि, तथा उन्मत्तानि क्षिप्तप्रायाणि चण्डानि अत्यन्तक्रुद्धानि च यानि श्वापदकुलानि व्याघ्रादिहिंस्रजन्तुगणाः तैः सङ्कुलानि व्याप्तानि गिरिगह्वराणि पर्वतगुहा येषु तानि, जनस्थानं पर्य्यन्तः सीमा येषां तानि। अभि लक्ष्यीकृत्य वर्त्तन्ते दक्षिणदिग् लम्बमानानीत्यर्थः।

निष्कूजेति। क्वचित् कस्मिंश्चिद्भागे निष्कूजाः हिंस्रसञ्चारात् पक्ष्यादीनामपि शब्दरहिताः, अतएव स्तिमिताः निश्चलाः, तथा क्वचिदपि भागे प्रोच्चण्डाः भयङ्कराः सत्त्वानां जन्तूनां स्वनाः शब्दा यासु ताः, क्वचिच्च स्वेच्छया न तु केनाप्युपद्रवेण क्लान्ततयेत्यर्थः सुप्ता निद्रिता ये गभीरभोगा विशालशरीरा भुजगाः सर्पाः तेषां श्वासेन निश्वासवायुना प्रदीप्तोऽग्निर्यासु ताः, प्रदराणां विदीर्णभूमिगर्त्तानाम् उदरेषु मध्येषु विलसत् प्रकाशमानं स्वल्पम् अम्भो जलं यासां ताः सीमानः भागविशेषाः वर्त्तन्ते इति शेषः। यासु सीमसु तृष्यद्भिः पिपासुभिः प्रतिसूर्य्यकैः कृकलासैः अजगराणां सुप्तवृहत्सर्पाणाम् अयं दृश्यमानः स्वेदद्रवः घर्म्मजलं पीयते। सुतरां लोमहर्षणमिदं वनमिति भावः।

अत्र स्वभावोक्तिरलङ्कारः। गभीरशब्दस्य निम्नार्थे शक्तत्वात् अत्र तु विशालार्थे

(ম) শম্বূক। হাঁ; সকল প্রাণীরই লোমহর্ষণ জনস্থানপ্রান্তবর্ত্তী এই দীর্ঘবনশ্রেণী, দক্ষিণদিকে গিয়াছে; ইহার ভিতরের পর্ব্বতগুহাগুলি, উন্মত্ত অত্যন্ত ক্রুদ্ধস্বভাব হিংস্রজন্তুগণে পরিপূর্ণ। যেহেতু—

रामः । पश्यामि च जनस्थानं भूतपूर्वखरालयम् ।
प्रत्यक्षानिव (१) वृत्तान्तान् पूर्वाननुभवामि च ॥१७॥

लक्षणया प्रयोगात् तस्याश्च लक्षणाया रूढ़िप्रयोजनाभावात् नेयार्थत्वदोषः, स च विश्वाल-भोगेति पाठेन समाधेयः । निष्कूजस्तिमिता इत्यनेन हिंस्रजन्तुसञ्चारी व्यज्यत इति वस्तुना वस्तुध्वनिः ।

"चण्डस्त्वत्यन्तकोपनः ।" "द्रव्यासु व्यवसायेषु सत्त्वमस्त्री तु जन्तुषु ।" "भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः ।" "दरीऽस्त्रियां भये श्वभ्रे" इति चामरः । "प्रतिसूर्य्यकः कृकलासः ।" "अजगरः स्वनामख्यातबृहत्सर्पं" इति च शब्दकल्पद्रुमः ।

शार्दूलविक्रीड़ितं वृत्तम् ॥१६॥

पश्यामीति । भूतपूर्वः खरस्य तदाख्यराक्षसस्य आलयो निवासो यस्मिन् तत् तथोक्तं जनस्थानं पश्यामि च पूर्वानतीतान् वृत्तान्तान् खरदूषणादिभिः सह युद्धादिघटनावली-रित्यर्थः प्रत्यक्षानिव अनुभवामि च । दर्शनसमय एव अतीतघटनावलीनां प्रत्यक्षव-दनुभव इत्यर्थः ।

अत्र पश्यामि अनुभवामीति क्रियासमुच्चयोऽयमलङ्कारः, तथा अतीतघटनानां प्रत्यक्षाय-माणत्वात् भाविकालङ्कारश्चेत्यनयोरङ्गाङ्गिभावेन सङ्करः । तथा च साहित्यदर्पणः—

"अद्भुतस्य पदार्थस्य भूतस्याथ भविष्यतः ।
यत्प्रत्यक्षायमाणत्वं तद्भाविकमुदाहृतम् ॥"

केचित्तु प्रत्यक्षत्वोत्प्रेक्षा इति वदन्ति ।

ইহার কোন দিকের স্থানগুলি, নীরব ও নিস্পন্দ, কোন দিকে জন্তুগণের ভয়ঙ্কর শব্দ হইতেছে, কোন স্থানে ইচ্ছানুসারে নিদ্রিত বিশালদেহ সর্পগণের নিশ্বাসে অগ্নি জ্বলিতেছে এবং প্রান্তভাগের বিদীর্ণ ভূগর্ত্তের ভিতরে অল্প জল রহিয়াছে ; যে প্রান্তভাগে তৃষ্ণার্ত্ত কৃকলাসগণ, বৃহৎসর্পের ঘর্ম্মজল পান করিতেছে ॥১৬॥

(१) प्रत्यक्षमिवेति पाठान्तरम् ।

सर्वतोऽवलोक्य। सर्वथा प्रियारामा हि वैदेह्यासीत्, एतानि तानि नाम कान्ताराणि, किमतः परं भयानकं स्यात्?। (य)

साश्रम्। त्वया सह निवत्स्यामि वनेषु मधुगन्धिषु।
इति हारमतैवासौ (१) स्नेहस्तस्याः स तादृशः॥१८॥

---

पूर्वं भूत इति भूतपूर्वः "षष्ठ्यन्ताद्भूतपूर्वाभिधेये रूप्यश्चे"ति ज्ञापकात् भूतशब्दस्य पूर्वनिपातः॥१७॥

(य) सर्वेति। सर्वतः समन्ततः सर्वासु दिक्षु इत्यर्थः "समन्ततस्तु। परितः सर्वतो विष्वगित्यपी"त्यमरः। अत्रारामपदेन वनमात्रमभिप्रेतं तेन प्रियः प्रीतिकर आरामो वनं यस्याः सा। हिशब्दोऽवधारणे। एतानि दृश्यमानानि, तानि येषु पूर्वं सीतया सह पर्य्यटितं तानीत्यर्थः, कान्ताराणि महारण्यानि। अत्र एकाकिनो मम वनदर्शनात् परं किं वस्तु भयानकं दारुणदुःखकरत्वेन भयङ्करं स्यात् अपि तु किमपि नेत्यर्थः। येषु वनेषु सीतया सह महामोदेन भ्रमणं कृतवान् अद्य तेष्वेव वनेषु सीतां विना केवलमहं भ्रमामीति महादुःखकरमेतदिति भावः।

त्वयेति। त्वया रामेण सह मधुना पुष्परसेन गन्ध इति मधुगन्धः स एषामस्तीति मधुगन्धीनि तेषु, प्रस्फुटितनानाकुसुमशालिष्वित्यर्थः वनेषु निवत्स्यामि स्थास्यामि, न तु त्वां विना राजधान्यामपि स्थातुमिच्छामीति भावः। इति एवम् उक्त्वेति शेषः, असौ सीता आरमत आनन्दं प्रकाशितवती। हा इति शोकसूचकमव्ययम्। स सत्यः सीतायाः स्नेहः

---

রাম। যেখানে পূর্ব্বে খরের ( রাক্ষসের ) বাড়ী ছিল, সেই জনস্থান দেখিতেছি এবং পূর্ব্বের বৃত্তান্তগুলিকে যেন প্রত্যক্ষভাবে অনুভবও করিতেছি॥১৭॥

(য) ( সকল দিকে দৃষ্টিপাত করিয়া ) বনগুলি, সর্ব্বপ্রকারেই সীতার প্রিয় ছিল; এই সেই সকল মহাবন; ইহার পর কি ভয়ঙ্কর হইতে পারে ?।

---

(१) इति च रमतेवासौ, इति हा रमते सीता, इतीवारमतीवासौ इति पाठान्तराणि।

अकिञ्चिदपि कुर्वाणः सौख्यैर्दुःखान्यपोहति ।
तत्तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः ॥१९॥

स इव सीतायाः स्नेह इव दृश्यत इति तादृश आसीदिति शेषः । सीतास्नेहः सीतास्नेह इवासीदित्यर्थः ।

अत्र एकस्यैव स्नेहस्य उपमानोपमेयत्वकल्पनात् अनन्वयोऽलङ्कारः । "उपमानोपमेयत्व-मेकस्यैवत्वनन्वय" इति साहित्यदर्पणात् । तेन तत् स्नेहस्यासाधारणत्वं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः ॥१८॥

अकिञ्चिदिति । अकिञ्चिदपि कुर्वाणः कञ्चिदपि दुःखनाशोपायं न कुर्वाणोऽपीत्यर्थः प्रियोजनः, सौख्यैः अवलोकनालापादिजनिताभिरविच्छिन्नसुखधाराभिरित्यर्थः दुःखानि संसारक्लेशान् अपोहति नाशयति । कथमेतत् सम्भवतीत्याह, हि यस्मात् यो जनो यस्य प्रियः तत् स जन इत्यर्थः तस्य किमपि अनिर्वचनीयम् अमूल्यं वा द्रव्यं धनं सुतरां तादृशजन-लाभेनैव दुःखनाशः सम्भवति, सीता च ममैवं प्रियजन आसीदिति भावः ।

अत्र अप्रस्तुतात् प्रियजनसामान्यात् प्रस्तुतस्य सीतारूपविशेषप्रियजनस्य प्रतीतेरप्रस्तुतप्रशंसा-लङ्कारः, तथा किञ्चिदकरणेऽपि दुःखनाशोत्पत्तेर्विभावना, सा च सौख्यैरित्युक्तेरुक्त-निमित्ता, तथा दुःखनाशं प्रति प्रियजनस्य अमूल्यधनत्वं हेतुरिति कारणेन कार्य्यसमर्थन-रूपोऽर्थान्तरन्यासः, तथा प्रियो जनः किमपि द्रव्यमिति निरङ्गं केवलं रूपकमित्येतेषा-मङ्गाङ्गित्वेन सङ्करः । तथा कुर्वाण इत्यनेन सम्बन्धयोग्यस्य नञः किञ्चिदित्यनेन योगात् अभवन्मतसम्बन्धदोषः स च "किञ्चिदपि न कुर्वाण" इति पाठेन समाधेयः ।

"द्रव्यं वित्तं स्वापतेयं रिक्थमृक्थं धनं वसु" इत्यमरः ।

सुखानां कर्म्माणि ( दर्शनादीनि ) इति "गुणवचनब्राह्मणादिभ्यः" इत्यादिना यण् इति सौख्यानि । तदिति "य आधारस्तदधिकरण"मितिवत् द्रव्यमित्यस्य विशेषणत्वेन नपुंसकम् ॥१९॥

( অশ্রুপাতের সহিত ) মধুগন্ধসমন্বিত বনে আপনার সহিত বাস করিব ; হায় ! এই কথা বলিয়া সীতা আনন্দ অনুভব করিতেন ; তাঁহার সেই স্নেহ সেই রকমই ছিল বটে ॥১৮॥

কিছু না করিয়াও, সুখদ্বারাই দুঃখ নাশ করে ; কারণ, যে যাহার প্রিয় জন, সে তাহার নিকট কোন অনির্বচনীয় দ্রব্য ॥১৯॥

शम्बूकः । तदलमेभिर्दुरासदैः । अथैतानि मदकलमयूरकण्ठ-कोमलच्छविभिरवकीर्णानि पर्य्यन्तै-(१) रविरलनिविष्ट-नील-बहल-च्छाय-तरुषण्डमण्डितानि असम्भ्रान्तविविधमृगयूथानि पश्यतु महानुभावः प्रशान्तगम्भीराणि मध्यमारण्यकानि । (२)

(२) शम्बूक इति । भीषणवनदर्शनजनितोऽयं रामस्य विषाद इति भ्रमेण कोमलवन-दर्शनेन तं विषादमपनेतुमाह तदलमित्यादि । दुःखेन आसद्यते चक्षुषा गृह्यत इति दुरासदानि तैरेभिर्वनैरलं विषादभीतिवर्द्धकतया एषां वनानां वर्णनं दर्शनञ्च निष्प्रयोजन-मित्यर्थः । अथेति वाक्यान्तरारम्भे । महानुभावो महाप्रभावो भवान् एतानि अग्रवर्त्तीनि, मदकला अव्यक्तशब्दकारिणो ये मयूराः तेषां कण्ठानामिव कोमला स्निग्धा छविः कान्तिर्येषां तैः, पर्य्यन्तैः परिसरैः शेषभागैरिति यावत् अवकीर्णानि विक्षिप्तानि वेष्टितानी-त्यर्थः, तथा अविरलम् अनवकाशं घनमिति यावत् यथा तथा निविष्टाः स्थिता अतएव नीला श्यामला, बहला गाढ़ा च छाया येषां ते तथोक्ता ये तरुणा नवीनास्तरुषण्डा वृक्षसमूहास्तैर्मण्डितानि, तथा असम्भ्रान्तं भयाभावात् अचकितं विविधानां नानाप्रकाराणां मृगाणां हरिणानां यूथं समूहो येषु तानि, तथा प्रशान्तानि सौम्यानि च तानि गम्भीराणि दूरवगाहानि अनन्तानि चेति तानि, मध्यमारण्यकानि मध्यवर्त्तीनि वनानि पश्यतु । शान्तस्निग्धवस्तुदर्शनेन मनसः प्रफुल्लता स्यादिति वक्तुरभिप्रायः ।

"मदकलः । अव्यक्तप्रलापी ।" "बहलः । दृढ़े" इति च शब्दकल्पद्रुमः । यद्यपि "कदम्बे षण्डमस्त्रिया"मित्यमरेण पद्मादिसमूह एव षण्डशब्दस्य शक्तिरभिहिता, तथापि प्राणिसमूहवाचकसङ्घशब्दस्य "छेकी व्यञ्जनसङ्घस्य" इत्यादावप्राणिसमूहेऽपि प्रयोगवत् अजहत्स्वार्थलक्षणया तरुषण्डेत्यत्रापि सामान्यसमूहेऽपि षण्डशब्दस्य प्रयोगः ।

(২) শম্বূক। এই দুর্দৃশ্য দর্শনের প্রয়োজন নাই; মহাত্মা এই মনোহর অথ চ গম্ভীর ( অসীম ) মধ্যবর্ত্তী বনগুলিকে দর্শন করুন; মত্ত ও অব্যক্তশব্দকারী ময়ূরের কণ্ঠের ন্যায় কোমলকান্তিসমন্বিত প্রান্তভাগদ্বারা এই বনগুলি পরিবেষ্টিত এবং ঘনসন্নিবিষ্ট ও নীলবর্ণ

(१) पर्वतैरिति क्वापि पाठः ।

इह समदशकुन्ताक्रान्तवानीरवीरुत्-
प्रसवसुरभिशीतस्वच्छतोया वहन्ति ।
फलभरपरिणामश्यामजम्बूनिकुञ्ज-
स्खलनमुखरभूरिस्रोतसो निर्झरिण्यः ॥२०॥

अपि च, (ल) दधति कुहरभाजामत्र भल्लूकयूना-
मनुरसितगुरूणि स्त्यानमम्बूकृतानि ।
शिशिरकटुकषायः स्त्यायते शल्लकीना-
मिभदलितविकीर्णग्रन्थिनिष्यन्दगन्धः ॥२१॥

---

इहेति । इह मध्यमारण्ये समदैः मत्तैः, शकुन्तैः पक्षिभिः, आक्रान्तानाम् उड्डीय आश्रितानां वानीरवीरुधां वेतसलतानां प्रसवैः पुष्पैः सुरभीणि सुगन्धीनि, शीतानि स्वभावशीतलानि स्वच्छानि अतीवनिर्म्मलानि तोयानि जलानि यासां तास्तथोक्ताः । तथा फलभराणां फलसमूहानां परिणामेन पक्वतया श्यामाः श्यामवर्णा ये जम्बूनिकुञ्जा घनीभूत-जम्बूवृक्षाः छादितदेशा इत्यर्थः, तेषु स्खलनेन प्रतिघातेन मुखराणि शब्दायमानानि भूरीणि प्रचुराणि स्रोतांसि प्रवाहा यासां तास्तथोक्ता निर्झरिण्यो नद्यो वहन्ति प्रवहन्ति ।

अत्र स्वभावोक्तिरलङ्कारः । मालिनी वृत्तम् ॥२०॥

(ल) अपि चेति । अन्यच्च वक्तव्यमस्तीति शेषः ।

दधतीति । अत्र मध्यमारण्ये कुहरभाजां गिरिगह्वरवासिनां भल्लूकयूनां तरुण-

---

প্রচুরচ্ছায়াশালী বৃক্ষসমূহে পরিশোভিত এবং এই বনসমূহের মধ্যে নানাবিধ জন্তুসমূহ নির্ভয়ে বিচরণ করিতেছে।

এই বনের ভিতরে বহুতর নদী প্রবাহিত হইতেছে, মদমত্ত পক্ষিগণকর্তৃক অধিষ্ঠিত বেতসতলার পুষ্পে ঐ নদীগুলির শীতল ও নির্ম্মল জল সুগন্ধি হইতেছে এবং ফলসমূহের পক্কতাবশতঃ শ্যামবর্ণ জম্বূ-( জাম ) বনে প্রতিহত হইয়া ঐ নদীগুলির বহুতর স্রোত, শব্দিত হইতেছে ॥২০॥

रामः। सवाष्पस्तम्भम्। भद्र! शिवास्ते पन्थानः, देवयानं प्रतिपद्यस्व पुण्येभ्यो लोकेभ्यः। (व)

भल्लूकानाम् अनुरसितेन प्रतिध्वनिना गुरूणि वर्द्धितानीत्यर्थः अम्वृकृतानि सनिष्ठीवशब्दाः थुत्कारशब्दा इति यावत्, थुत्कारस्तु भल्लूकानां स्वभावः स्यानं वृद्धिं दधति धारयन्ति थुत्कारशब्दा वृहन्तः श्रूयन्त इत्यर्थः। शल्लकीनां लताविशेषाणां शिशिरः शीतलः कटुः कटुरसः कषायः सुरभिश्च इभैर्हस्तिभिः दलिता मर्द्दिताः अतएव विकीर्णा इतस्ततो विक्षिप्ता ये ग्रन्थयः संयुक्तदेशास्तेषां निष्यन्दस्य निर्यासरसस्य गन्धः स्त्यायते वर्द्धते हस्तिमद-गन्धप्रसारादिति भावः।

अत्र अम्वृकृतानां वृद्धिं प्रति अनुरसितगुरुत्वं हेतुरिति पदार्थहेतुकं काव्यलिङ्ग-मलङ्कारः।

यौवने बलाधिक्यात् ध्वनेर्दीर्घत्वसूचनाय भल्लूकयूनामिति युवशब्दप्रयोगः।

"अम्वृकृतं सनिष्ठीव"मित्यमरः। "कटुतिक्तकषायास्तु सौरभे च प्रकीर्त्तिता" इति हलायुधः। "अष्टकं शल्लकीलताया"मित्यमरकोषटीका। श्लोकद्वयमिदमविकलं महावीरचरिते मालतीमाधवे च दृश्यते। मालिनी वृत्तम्॥२१॥

(व) राम इति। वाष्पस्तम्भेन अश्रुनिरोधेन सहेति सवाष्पस्तम्भम् आहेतिक्रिया-विशेषणम्। शम्वूकसमीपे अश्रुपतने अविदितवृत्तान्तकशम्वूकस्य जिज्ञासा स्यात् तत्-कथने च धैर्य्यापगमेन लाघवं स्यादिति कवेर्भावः।

पन्थानो गमनमार्गाः शिवा मङ्गलकराः सन्त्विति शेषः। निर्विघ्नं तव गमनमस्त्वि-त्यर्थः। पुण्येभ्यो लोकेभ्यः पवित्रस्थानेभ्यः ब्रह्मलोकेभ्य इत्यर्थः गन्तुमिति शेषः, देवयानं देवविमानं प्रतिपद्यस्व लभस्व इत्याशीर्वादः। त्वं गन्तुमर्हसीति भङ्ग्यन्तरेण गमनाय अनुमोदनम्। "देवयानं देवविमान"मिति शब्दकल्पद्रुमः।

(ल) আরও, এই বনে গুহাস্থিত যুবক ভল্লূকগণের থুৎকারের শব্দ, প্রতিধ্বনিতে বৃহৎ হইয়া, বৃদ্ধি প্রাপ্ত হইতেছে এবং শল্লকীলতার গ্রন্থিদেশ, হস্তিকর্তৃক ভগ্ন হওয়ায় শীতল, কটু এবং ঘ্রাণের তৃপ্তিকর নির্যাসের গন্ধ বৃদ্ধি পাইতেছে॥২১॥

शम्बूकः। यावत् पुराणब्रह्मवादिनमगस्त्यमृषिमभिवाद्य शाश्वतं पदमनुप्रविशामि। इति निष्क्रान्तः। (श)

रामः। एतत्तदेव हि वनं पुनरद्य दृष्टं
यस्मिन्नभूम चिरमेव पुरा वसन्तः।
आरण्यकाश्च गृहिणश्च रताः स्वधर्म्मे
सांसारिकेषु च सुखेषु वयं रसज्ञाः ॥२२॥

(श) शम्बूक इति। पुराणब्रह्मवादिनं प्राचीनं वेदवक्तारं वेदाध्यापकमित्यर्थः अभिवाद्य यावत् प्रणिपत्यैवेत्यर्थः यावच्छब्दोऽयमवधारणे। शाश्वतं पदं नित्यं स्थानं ब्रह्मलोकम् अनुप्रविशामि गच्छामि। अगस्त्यसदृशमहापुरुषप्रणामस्य महाफलजनकत्वात् समीपवर्त्तित्वेन सुलभं तं प्रणामं कः परित्यजतीति भावः।

अत्र ब्रह्मलोकस्य नित्यत्वं ततः पतनराहित्यरूपं बोध्यम्। तथा च देवीपुराणम्—

"सत्यस्तु सप्तमो लोको ह्यपुनर्भववासिनाम्।
ब्रह्मलोकः समाख्यातो ह्यप्रतीघातलक्षणः॥"

एतदिति। अद्य तदेव एतद्वनं पुनर्दृष्टम्, वनवासकाले प्रथमम् एतत् द्वितीयवारं दृष्टमित्यर्थः। हिशब्दः पादपूरणे। यस्मिन् वने पुरा वनवासकाले चिरमेव बहुकालमेव वसन्तस्तिष्ठन्तो वयं सीतारामलक्ष्मणाः स्वधर्म्मे स्वयोरारण्यकगृहस्थयोर्धर्म्मो आचारे रताः, वन्यफलमूलादिभोजनवल्कलपरिधानादयो वानप्रस्थधर्म्माः अतिथिसत्कारादयो गृहस्थ-धर्म्मास्तेषु आसक्ताः सन्त आरण्यका वानप्रस्थाश्रमिणः, गृहिणो गृहस्थाः, सांसारिकेषु संसारि-भोग्येषु सुखेषु च अङ्गनालिङ्गनभावत्वात्सल्यानुभवादिषु रसज्ञाः आस्वादानुभवकारिणश्च अभूम भूतवन्तः स्मः। एकस्याः सीताया अभावेन तेषां किमपि सम्प्रति नास्तीति भावः।

---

(ব) রাম। (অশ্রুনিরোধের সহিত) ভদ্র! তোমার পথ মঙ্গলময় হউক এবং পবিত্র লোকে যাইবার জন্য তুমি দেববিমান লাভ কর।

(শ) শম্বূক। প্রাচীন বেদবক্তা অগস্ত্যমুনিকে অভিবাদন করিয়া সনাতন ব্রহ্মলোকে প্রবেশ করি। (এই বলিয়া চলিয়া গেল।)

अपि च, (ष) एते त एव गिरयो विरुवन्मयूरा-
स्तान्येव मत्तहरिणानि वनस्थलानि।
आमञ्जुवञ्जुललतानि च तान्यमूनि
नीरन्ध्रनील-(१) निचुलानि सरित्तटानि ॥२३॥

अत्र वनवासरूपं कार्य्यं कुर्वतां रामादीनां गृहस्थत्वादिकार्य्यकरणं दैवादिति "गृहिणी सचिवः सखी मिथ" इति साहित्यदर्पणोदाहृतवत् विशेषालङ्कारः। तथा च साहित्यदर्पणः—

"यदाधेयमनाधारमेकञ्चानेकगोचरम्।
किञ्चित् प्रकुर्वतः कार्य्यमशक्यस्येतरस्य वा।
कार्य्यस्य करणं दैवाद्विशेषस्त्रिविधस्ततः॥"

पादपूरणमात्रप्रयोजनेन हिशब्दप्रयोगात् निरर्थकत्वदोषः, स च "एतत्तदेव विपिनं पुनरद्य दृष्ट"मिति पाठात् समाधेयः।

वानप्रस्थगृहस्थधर्म्मावुक्तौ गरुड़पुराणे। यथा—

"भूमौ मूलफलाशित्वं स्वाध्यायस्तप एव च।
संविभागी यथान्यायं धर्म्मोऽयं वनवासिनः॥" इत्यादिः।
"पञ्चभिश्च महायज्ञैः श्रद्दधानो यजेदिह।
देवतातिथिशिष्टाशी नियतो वेदकर्म्मसु॥" इत्यादिः।

"आस्वादे च रसं प्राहु"रिति शब्दार्णवः ॥२२॥

(ष) अपि चेति। अपि च अन्यच्चेत्यर्थः, ब्रवीमीति शेषः।

एत इति। विरुवन्तः शब्दायमाना मयूरा येषु ते, एते दृश्यमानाः त एव पूर्वदृष्टा

---

রাম। এই সেই বনকেই পুনরায় আজ দেখিলাম; আমরা পূর্ব্বে যে বনে দীর্ঘকাল বাস করতঃ, স্ব স্ব ধর্ম্মে রত থাকিয়া, বানপ্রস্থাবলম্বী, গৃহস্থ এবং সাংসারিক সমস্ত সুখে রসাভিজ্ঞ ছিলাম ॥২২॥

---

(१) नीप इति पाठभेदः।

मेघमालेव यश्चायमारादपि विभाव्यते ।
गिरिः प्रस्रवणः सोऽयं यत्र गोदावरी नदी ॥२४॥

एव गिरयः पर्वताः, तथा मत्ता हर्षदृप्ता हरिणा येषु तानि, तान्येव पूर्वदृष्टान्येव वनस्थलानि । आमञ्जवः अतिमनोहरा वञ्जुला अशोकवृक्षा लताश्च येषु तानि, तथा नीरन्ध्रा निरवकाशा घनाः नीलाः श्यामलाश्च निचुला वेतसा येषु तानि पूर्वदृष्टानि अमूनि दृश्यमानानि सरित्तटानि नदीतीराणि । सर्वत्र सन्तीति क्रिययान्वयः ।

अतएवात्र तुल्ययोगितालङ्कारः । न चात्र सन्तीत्यनुक्त्या न्यूनपदत्वदोष इति वाच्यं वामनादिभिरस्तीत्यध्याहारादौ तद्दोषस्यानङ्गीकारात् ।

"वकुलो वञ्जुलोऽशोके" इत्यमरः । "वाणीरे कविभेदे स्यान्निचुलः स्थलवेतसे" इति शब्दार्णवः ।

पूर्वश्लोके अत्र च वसन्ततिलका वृत्तम् ॥२३॥

मेघेति । अयं यः मेघमालेव आरादपि दूरादपि विभाव्यते पर्वतत्वेन बुध्यते, सोऽयं प्रस्रवणो नाम गिरिः पर्वतो विद्यत इति शेषः । यत्र पर्वते गोदावरी नदी अस्तीति शेषः । यस्य पाददेशे प्रवहतीत्यर्थः ।

अत्रोपमालङ्कारः । न चात्र मेघमालेति स्त्रीलिङ्गत्वात् "सुधेव धवलश्चन्द्र" इत्यादिवद्भग्नप्रक्रमत्वदोष इति वाच्यं "यत्र लिङ्गवचनभेदेऽपि न साधारणधर्मस्यान्यथाभावस्तत्र न दोषः। यथा "मुखं चन्द्र इवाभाती"ति दर्पणकारोक्तेः सुष्ठुत्वात् ।

"आराद्दूरसमीपयो"रित्यमरः ॥२४॥

---

(ষ) আরও, শব্দায়মান-ময়ূর-সমন্বিত সেই সকল পর্ব্বতই এই; মত্তহরিণযুক্ত সেই বনভূমিই এই এবং মনোহর অশোকবৃক্ষ ও বহুতর লতাযুক্ত এবং ঘন ও নীলবর্ণ বেতসলতাসমন্বিত সেই সকল নদীতীরই এই ॥২৩॥

মেঘমালার ন্যায় এই যাহাকে দূর হইতেও পর্ব্বত বলিয়া বুঝা যাইতেছে; এই সেই প্রস্রবণপর্ব্বত, যাহাতে গোদাবরী নদী রহিয়াছে ॥২৪॥

अस्यैवासीन्महति शिखरे गृध्रराजस्य वास-
स्तस्याधस्ताद्वयमपि रतास्तेषु पर्णोटजेषु ।
गोदावर्य्याः पयसि विनतश्यामलानोकहश्री-(१)
रन्तः कूजन् मुखरशकुनो यत्र रम्यो वनान्तः ॥२५॥

आ, तदत्रैव सा पञ्चवटी, यत्रातिचिरनिवासेन विविध-विस्रम्भातिप्रसङ्गसाक्षिणः प्रदेशाः, प्रियायाः प्रियसखी च वासन्ती

---

अस्येति । अस्यैव प्रस्रवणस्य महति शिखरे विशाले शृङ्गे गृध्रराजस्य पक्षिश्रेष्ठस्य जटायुष इत्यर्थः वास आसीत्, तस्य शृङ्गस्य अधस्तात् निम्नदेशे नीचस्थितेष्वित्यर्थः तेषु पूर्व्वाश्रितेषु पर्णोटजेषु पत्रनिर्म्मितकुटीरेषु वयमपि सीतारामलक्ष्मणाः रताः आसक्ताः स्थिता इति यावत् । यत्र निम्नदेशे गोदावर्य्या नद्याः पयसि जले विनतानां फलभारेणावनतानां जलपर्य्यन्तपतितानामित्यर्थः श्यामलानां श्यामवर्णानाम् अनोकहानां वृक्षाणां श्रीः शोभा यस्मिन् स तथोक्तः, तथा मुखराः शब्दायमानाः शकुनाः पक्षिणो यत्र सः, अतएव अन्तर्मध्ये कूजन् शब्दं कुर्व्वन्निव स्थितः, रम्यो मनोहरः वनान्तः वनस्वरूपं वनमिति यावत्, विद्यत इति शेषः ।

अत्र प्राणिकर्त्तव्यस्य कूजनस्य वनेन कर्त्तुमशक्यत्वात् कूजन्निवेत्यर्थो वाच्यः तेन भावाभिमानिनी प्रतीयमाना क्रियोत्प्रेक्षालङ्कारः ।

"गृध्रराजः । जटायुपक्षी"ति शब्दकल्पद्रुमः । "अनोकहः कुठः सालः पलाशी द्रुद्रुमागमाः ।" "अन्तः स्वरूपे नाशि ना" इति चामरः । मन्दाक्रान्ता वृत्तम् ॥२५॥

---

ইহারই বৃহৎ শৃঙ্গে পক্ষিরাজ জটায়ুর বাস ছিল; তাহার নীচে আমরাও সেই সকল পর্ণশালায় অবস্থিত ছিলাম; যেখানে ফলের ভারে গোদাবরীর জলপর্য্যন্ত অবনত শ্যামবর্ণ বৃক্ষসমূহের শোভা প্রকাশ পাইত এবং যেখানে মনোহর বনপ্রান্তে পক্ষিগণ শব্দ করিত; তাহাতে ঐ বনপ্রান্তই যেন ভিতরে শব্দ করিত বলিয়া বোধ হইত ॥২৫॥

---

(१) वितत इति पाठान्तरम् ।

नाम वनदेवता प्रतिवसति, तत् किमिदमापतितमद्य रामस्य (१) ?। सम्प्रति हि—(स)

चिरोद्वेगारम्भी (२) प्रसृत इव तीव्रो विषरसः
कुतश्चित् संवेगान्निहित इव (३) शल्यस्य शकलः।
व्रणो रूढ़ग्रन्थिः स्फुटित इव हृन्मर्म्मणि पुन-
र्घनीभूतः शोको विकलयति सम्मूर्च्छयति च (४) ॥२६॥

(स) अा इति। अा इति स्मरणसूचकमव्ययम्। अत्रैव देशे। यत्र पञ्चवट्याम् अतिचिरनिवासेन अतिदीर्घकालावस्थानेन। एकत्र दीर्घकालावस्थानेन हि तत्स्थान-स्यावस्था सम्यक् परिज्ञाता स्यात् सुतरां तत्र विस्रम्भातिप्रसङ्गस्य सम्भव इति भावः। विस्रम्भेन फलमूलाद्याहरणार्थं लक्ष्मणेन बहुकालिकं दूरप्रस्थानं कृतम् अन्येषाञ्चागमना-सम्भवेन दर्शनासम्भव इति विश्वासेन, ये अतिप्रसङ्गाः स्वच्छन्दप्रेमालापविहारादीनामत्यन्त-प्रसक्तयः प्रचुरसम्बन्धा इति यावत् ते विस्रम्भातिप्रसङ्गाः। विविधानां नानाप्रकाराणां विस्रम्भातिप्रसङ्गानां साक्षिणो द्रष्टारः प्रदेशाः स्थानानि सन्तीति शेषः। तत् तस्मात् अद्य रामस्य इदं किम् आपतितम् उपस्थितं सीतया सह पूर्वदृष्टानाम् एतेषाम् अद्य तां विना एकाकिनो मम दर्शनं महादुःखकारणमिति भावः। तत् दुःखं प्रकाशयति सम्प्रति हीत्यादिना। हि तथाहि।

"अा प्रगृह्यं स्मृतौ वाक्ये।" "समौ विस्रम्भविश्वासा"विति चामरः।

चिरोद्वेगेति। चिरं बहुकालस्थायिनम् उद्वेगं हृदयोद्वेलनं मनोयन्त्रणामिति यावत्

(স) ও! তা এইখানেই সেই পঞ্চবটী; যে পঞ্চবটীতে দীর্ঘকাল বাস করায় বিশ্বাসবশতঃ নানাবিধ অতিরিক্ত ঘটনার সাক্ষীস্থানগুলি রহিয়াছে এবং প্রিয়তমা সীতার প্রিয়সখী বাসন্তীনামে বনদেবতা বাস করেন। তা, রামের আজ এ কি উপস্থিত হইল?। এখন—

(१) रामहतकस्येति क्वापि पाठः। (२) चिराद्वेगारम्भीति पाठान्तरम्।
(३) चलित इव, प्रचल इव इति पाठभेदौ। (४) नूतन इति क्वापि पाठः।

तथापि पूर्वसुहृदो भूमिभागान् पश्यामि। निरूप्य। अहो! अनवस्थितो भूमिसन्निवेशः। तथाहि—(ह)

> पुरा यत्र स्रोतः, पुलिनमधुना तत्र सरितां,
> विपर्य्यासं यातो घनविरलभावः क्षितिरुहाम्।
> बहोर्दृष्टं कालादपरमिव मन्ये वनमिदं
> निवेशः शैलानां तदिदमिति बुद्धिं द्रढ़यति ॥२७॥

आरभते उत्पादयतीति चिरोद्वेगारम्भी तीव्रः अत्युग्रो विषरसः विषद्रवः प्रसृत इव, तथा शल्यस्य शङ्कोः शकलः खण्डः कुतश्चित् अनिर्वचनीयात् संवेगात् निहित इव हृदये निखात इव, तथा हृन्मर्म्मणि हृदयमध्यदेशे रूढ़ग्रन्थिः उत्पन्नसन्धिः बद्धमूल इति यावत् व्रणः स्फोटकः स्फुटितः विदीर्ण इव, शोकः अतीतसीतास्मृतिः पुनर्घनीभूतः सन्, कालेन विलीनप्रायोऽपि उद्बोधकतत्तत्स्थानदर्शनादिना सान्द्रतां प्राप्तः सन् विकलयति व्याकुलीकरोति सम्मूर्च्छयति मोहं प्रापयति च मामिति शेषः।

अत्र तिसृणां क्रियोत्प्रेक्षाणां मिथो नैरपेक्ष्येण संसृष्टिः तथा विकलयति सम्मूर्च्छयतीत्यनेकक्रिययोः शोक इत्येककर्त्तृकत्वात् दीपकञ्चालङ्कारः।

"गुणे रागे द्रवे रसः।" "वा पुंसि शल्यं शङ्कुर्ना" इति चामरः। शिखरिणी वृत्तम् ॥२६॥

(ह) ननु शोकोद्दीपकत्वादेतेषां दर्शनं न क्रियतामित्याह तथापीति। यद्यपि एतेषां दर्शनं शोकोद्दीपकं तथापीत्यर्थः। पूर्वसुहृदः सुहृद इव पुरा प्रियाचरणकारिण इत्यर्थः। निरूप्य सर्वतो विशेषेणावलोक्य। अहोशब्दः आश्चर्य्ये। भूमिसन्निवेशः अस्य स्थानस्यावस्था अनवस्थितः पूर्वतो वैषम्यं प्राप्तः। वैषम्यं समर्थयति तथाहीति।

---

বহুকাল যাবৎ অধীরতাজনক তীব্র বিষদ্রব যেন বিস্তৃত হইয়া পড়িতেছে; শল্যের (পেরেকের) খণ্ড যেন অনির্বচনীয় বেগে হৃদয়ের ভিতরে নিবেশিত হইতেছে; হৃদয়ের মর্ম্মস্থানে বদ্ধমূল ব্রণ যেন বিদীর্ণ হইতেছে এবং শোক প্রগাঢ় হইয়া, আমাকে বিকল করিয়া তুলিতেছে এবং মূর্চ্ছিত করিবার উপক্রম করিতেছে ॥২৬॥

पुरेति । पुरा सीतया सहावस्थानकाले यत्र सरितां नदीनां स्रोतः प्रवाहः आसीदिति शेषः, अधुना तत्र स्थाने पुलिनं जलादुत्थितं वालुकामयं तटं जातमिति शेषः । तथा क्षितिरुहां वृक्षाणां घनविरलभावः विपर्य्यासं वैपरीत्यं यातः । यत्र वृक्षा घना आसन् तत्र विरला जाताः, यत्र च विरला आसन् तत्र घना जाता इत्यर्थः । अतएव बहोः कालात् प्रभूतसमयात् परमिति शेषः दृष्टम् इदं वनम् अपरमिव तद्भिन्नं वनमिव मन्ये अनुभवामि । ननु तदेवेदं वनमिति निश्चये को हेतुरित्याह शैलानां प्रस्रवणादि-पर्वतानां निवेशः अवस्थानम् इदं तत् वनमिति बुद्धिं द्रढ़यति दृढ़ां करोति निश्चयज्ञानं जनयति । तरुनद्यादीनामन्यथाभावेऽपि पूर्वदृष्टशैलानामनन्यथाभावात् 'तदेवैतत्' वनमिति मम निश्चय इति भावः । इदन्त्वावच्छिन्नपक्षकं तद्वनत्वसाध्यकं पूर्वदृष्टतत्तच्छैलदर्शन-साधनकं ममेदमनुमानमभ्रान्तं हेत्वाभासाभावादिति वा भावः ।

अत्र अपरवनवज्ज्ञानं प्रति पूर्वार्द्धवाक्यद्वयं हेतुरिति वाक्यार्थहेतुकं काव्यलिङ्ग-मलङ्कारः, तथा "मुखमेणीदृशो भाति पूर्णचन्द्र इवापर" इति साहित्यदर्पणोदाहृतवत् भावाभिमानिनी वाच्या द्रव्योत्प्रेक्षा, तथा तदलङ्कारकृतविच्छित्तिवशात् तत्तच्छैलदर्शनरूप-साधनात्तद्वनत्वप्रकारकज्ञानरूपसाध्योपपत्त्या अनुमानालङ्कारश्चेत्येतेषामङ्गाङ्गिभावेन सङ्करः ।

"तोयोत्थितं तत्पुलिनम् ।" "प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु" इति चामरः ।

बहुशब्दो द्विविधः, संख्यावाचकः प्रचुरवाचकश्च, तत्र संख्यावाचकात् नित्यं बहुवचनं स्यात्, प्रचुरवाचकात्तु एकवचनमपि ; तेन बहोरिति प्रयोगः साधुः । न्यायकुसुमाञ्जलावपि "किं बहुना, यं कारवोऽपि विश्वकर्म्मेत्युपासते" इत्याद्यन्यत्रापि एकवचनं दृश्यते ।

शिखरिणी वृत्तम् ॥२७॥

---

(হ) তথাপি, পূর্ব্ববন্ধু স্থানগুলিকে দেখি। (দেখিয়া) ওহে! স্থানের অবস্থার বৈষম্য হইয়া পড়িয়াছে। তাহাই দেখাইতেছি—

পূর্ব্বে যেখানে স্রোত ছিল, এখন সেখানে নদীর চরা হইয়াছে; বৃক্ষসমূহের ঘনভাব ও বিরলভাব বৈপরীত্য প্রাপ্ত হইয়াছে (পূর্ব্বে গাছগুলি যেখানে ঘন ঘন ছিল এখন সেখানে ফাঁক ফাঁক হইয়াছে এবং যেখানে ফাঁক ফাঁক ছিল, এখন সেখানে ঘন ঘন হইয়াছে); সুতরাং বহুকালের

हन्त! परिहरन्तमपि मामितः पञ्चवटीस्नेहो बलादपकर्षतीव। सकरुणम्। (घ)

यस्यां ते दिवसास्तया सह मया नीता यथा (१) स्वे गृहे
यत्सम्बन्धिकथाभिरेव सततं दीर्घाभिरास्थीयते।
एकः सम्प्रति नाशितप्रियतमस्तामद्य रामः कथं
पापः पञ्चवटीं विलोकयतु वा, गच्छत्वसम्भाव्य वा? ॥२८॥

(घ) हन्तेति। हन्त खेदे। परिहरन्तमपि परित्यजन्तमपि, पञ्चवटीं विहाय गच्छन्तमपीत्यर्थः। अपकर्षतीव परावर्त्तयतीव इति क्रियोत्प्रेक्षा। स्वैरविहारस्थलत्वात् इमां विहाय गन्तुं नेच्छा भवतीति भावः। सकरुणं सशोकम्।

यस्यामिति। यस्यां पञ्चवट्यां स्वे गृहे यथा, स्वकीयराजधान्यामिव मया तया सीतया सह ते वनवासकालीना दिवसा नीता अतिवाहिताः, तथा दीर्घाभिः घटनानां बाहुल्येन विस्तृताभिः यत्सम्बन्धिकथाभिः यत्पञ्चवटीविषयकालापैरेव न त्वन्यकथोपकथनैरित्यर्थः सततम् आस्थीयते स्थितम् अयोध्यायां मया सीतया चेति शेषः। सम्प्रति नाशिता निर्वासनेन विनाशं प्रापिता प्रियतमा सीता येन स तथोक्तः, अतएव पापः पापात्मा एको रामः अद्य तां पञ्चवटीं कथं केन प्रकारेण वा विलोकयतु दारुणशोकेन विदीर्णहृदयत्वादेकस्य मम पञ्चवटीदर्शनमसम्भवमेवेति भावः। तथा असम्भाव्य अवस्थानेन असमाहृत्य कथं वा गच्छतु, या किल तदानीमावयोः परमसुखहेतुरासीत् केवलावस्थानेनापि सतां पञ्चवटीमसमाहृत्य गमनं नितान्तकृतघ्नताजनकमिति महाव्याकुलोऽस्मि संवृत्त इति भावः।

পর দৃষ্ট এই বনটী যেন অন্য বন বলিয়া মনে করিতেছি; তবে পর্বতগুলির অবস্থানই এই সেই বন এইরূপ ধারণাকে দৃঢ় করিতেছে ॥২৭॥

(ক) হায়! পরিত্যাগ করিয়া যাইতে লাগিলেও, পঞ্চবটীর স্নেহই যেন আমাকে এইখানে আকর্ষণ করিয়া রাখিতেছে। (শোকের সহিত)

নিজ গৃহের ন্যায় যে পঞ্চবটীতে আমি সীতার সহিত সেই সকল দিন অতিবাহিত করিয়াছিলাম এবং যে পঞ্চবটীর বিস্তৃত কথা

(१) पुनरिति पाठान्तरम्।

प्रविश्य शम्बूकः। जयति देवः। देव! भगवानगस्त्यो मत्तः श्रुतभवत्सन्निधानस्त्वामाह — परिकल्पितविमानावतरणमङ्गला प्रतीच्छति वत्सला लोपामुद्रा सर्वे च (१) महर्षयस्तदेहि, सम्भावयास्मान्; अथ प्रजविना पुष्पकेण स्वदेशमुपसङ्गम्याश्वमेधाय सज्जो भविष्यसीति। (क)

---

अत्र प्रथमपादे श्रौती उपमा, तया च राजधान्यामिव पञ्चवट्यां सुखसञ्चार आसीदिति वस्तु व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः। तथा पापित्वं प्रति नाशितप्रियतमत्वं हेतुरिति पदार्थहेतुकं काव्यलिङ्गञ्च अनयोः परस्परनैरपेक्ष्येण स्थितेः संसृष्टिः।

शार्दूलविक्रीड़ितं वृत्तम् ॥२८॥

(क) प्रविश्येति। मत्तः मत्, मम मुखादित्यर्थः श्रुतं भवतः सन्निधानं येन सः। परिकल्पितानि आयोजितानि विमानावतरणमङ्गलानि विमानादवतरणकालोचितमङ्गलसूचकधान्यदूर्वादीनि यया सा। वत्सला त्वां प्रति स्नेहवती। प्रतीच्छति तव दर्शनायावतिष्ठते। महर्षयश्च प्रतीच्छन्ते इत्यर्थः। तत्तस्मात् तव दर्शनाय तेषामाग्रहातिशयादित्यर्थः। अस्मान् सम्भावय आगमनेन समाद्रियताम्। अथ अस्मत्सम्भावनानन्तरं प्रजविना महावेगवता। अस्माकं सम्भावनायां यावत् कालक्षयो भवेत् पुष्पकस्य किञ्चिदधिकवेगस्थापनेन स पूर्णो भवेदिति भावः। सज्ज उद्युक्तः। इति इत्यन्तम् आहेत्यर्थः।

---

নিয়াই সর্ব্বদা আমরা অযোধ্যায় রহিয়াছি; আজ পাপাত্মা রাম প্রিয়তমা সীতাকে নষ্ট করিয়া, একাকী এখন সেই পঞ্চবটীকে কি করিয়া দেখে এবং কি করিয়াই বা আদর না করিয়া যায়? ॥২৮॥

(ক) শম্বূক। (প্রবেশ করিয়া) মহারাজ জয় হউক। মহারাজ! ভগবান্ অগস্ত্য, আমার নিকট আপনার সন্নিধান শ্রবণ করিয়া, আপনাকে এই কথা বলিয়াছেন যে—স্নেহশালিনী লোপামুদ্রা (অগস্ত্যের স্ত্রী) বিমান হইতে অবতরণ করিবার মাঙ্গলিক দ্রব্য আয়োজন করিয়া,

---

(१) आगत्यायन इति पाठभेदः।

रामः। यथाज्ञापयति भगवान्। (ख)

शम्बूकः। इतस्तर्हि देवः प्रवर्त्तयतु पुष्पकम्। (ग)

रामः। भगवति! पञ्चवटि! गुरुजनानुरोधात् क्षम्यतामतिक्रमो रामस्य। (घ)

शम्बूकः। देव! पश्य पश्य—

कूजत्कुञ्जकुटीरकौशिकघटाघुत्कारवत्कीचक-(१)
स्तम्बाडम्बरमूकमौकुलिकुलः क्रौञ्चावतोऽयं गिरिः।
एतस्मिन् प्रचलाकिनां प्रचलतामुद्वेजिताः कूजितै-
रुद्वेल्लन्ति पुराणचन्दनतरुस्कन्धेषु (२) कुम्भीनसाः ॥२८॥

---

(ख) राम इति। भगवानगस्त्यो यथाज्ञापयति तथैव करोमीत्यर्थः।

(ग) शम्बूक इति। तर्हि अगस्त्याज्ञानुरूपकर्त्तव्यत्वे सति इतः अस्मिन् पथि, पुष्पकं विमानं प्रवर्त्तयतु चालयत्वित्यर्थः।

(घ) राम इति। नानामुनिजननिवासात् माहात्म्यातिशयेन पञ्चवट्याः भगवतीति सम्बोधनम्। माहात्म्यवतीति तदर्थः। अतिक्रमः सम्भावनायाः अकरणम्, क्षम्यतां मृष्यताम्। अगस्त्यादेशादेवायमतिक्रमो न त्विच्छात इति भावः।

---

তোমার প্রতীক্ষা করিতেছেন এবং সকল মহর্ষিরাও প্রতীক্ষা করিতেছেন; অতএব আইস, আমাদিগকে সমাদৃত কর, তাহার পর বেগবান্ পুষ্পকে স্বদেশে যাইয়া অশ্বমেধযজ্ঞের জন্য প্রস্তুত হইবে।

(খ) রাম। ভগবান্ যাহা আদেশ করিয়াছেন ( তাহাই করি।)

(গ) শম্বূক। তাহা হইলে এই দিকে পুষ্পক সঞ্চালিত করুন।

(ঘ) রাম। মাহাত্ম্যশালিনি! পঞ্চবটি! গুরুজনের অনুরোধে রামের এই অতিক্রম ক্ষমা করুন।

---

(१) गुञ्जत्कुञ्ज इति क्वापि पाठः। (२) रोहिणतरुस्कन्धेष्विति पाठान्तरम्।

कूजदिति। कुञ्जं लताद्याच्छादितस्थानमेव कुटीरं क्षुद्रगृहं तत्र स्थिताः कौशिकघटाः पेचकसमूहाः। कूजन्तीनां शब्दायमानानां कुञ्जकुटीरकौशिकघटानां यो घुत्कारः 'घुत्' इत्येवं शब्दः तद्विशिष्टाः ये कीचकस्तम्बाः वंशगुच्छाः (बाँशझाड़) तेषाम् आड़म्बरेण उच्चरवेण मूकं भयेन निःशब्दं मौकुलिकुलं काकसमूहो यस्मिन् सः तथोक्तः, अयं क्रौञ्चा (कोँचवकी) अस्यास्तीति क्रौञ्चावान् स एवेति प्रज्ञादित्वात् स्वार्थेऽण् क्रौञ्चावतो नाम गिरिः पर्वतो विद्यत इति शेषः। कुञ्जे तिष्ठन्तः पेचका रुवन्ति, वंशस्तम्बप्रतिहतप्रतिध्वनिश्रवणेन भीताः काका यत्र निःशब्दास्तिष्ठन्तीति निष्कर्षः। एतस्मिन् गिरौ प्रचलतामितस्ततो भ्रमतां प्रचलाकिनां मयूराणां कूजितैः उद्वेजिताः भीताः सन्तः कुम्भीनसाः क्रूरसर्पाः पुराणचन्दनतरुस्कन्धेषु जीर्णचन्दनवृक्षाणां प्रकाण्डदेशेषु शाखोद्गमस्थानेष्विति यावत् उद्वेल्लन्ति पलायनार्थम् उत्तिष्ठन्ति। नानाविधजन्तुनिवासोऽयं गिरिरिति भावः।

अत्र कुञ्जकुटीरेत्यत्र निरङ्गं केवलं रूपकम्, तथा मानवगतमूकत्वं वर्णात्मकशब्दराहित्यं पशुपक्ष्यादिगतमूकत्वञ्च ध्वन्यात्मकशब्दराहित्यम्; किन्तु एकमूकशब्देन तयोरभेदाध्यवसायात् "विश्लेषदुःखादिव बद्धमौन"मिति साहित्यदर्पणोदाहृतवत् अतिशयोक्तिः, प्रधानालङ्कारस्य स्वभावोक्तिरित्येतेषाम् अङ्गाङ्गिभावेन सङ्करः। वृत्त्यनुप्रासश्च शब्दालङ्कारः।

"कुटीरं क्षुद्रवेश्म स्या"दिति जटाधरः। "महेन्द्रगुग्गुलूलूकव्यालग्राहिषु कौशिकः।" "वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धता" इति चामरः। "मौकुलिः काकः" इति शब्दकल्पद्रुमः। "आड़म्बरस्तु दर्पे स्यात् शब्दे तूर्य्यस्वनेऽपि च" इति रत्नकोषः। "प्रचलाकिसिलापाङ्गशिखावलगतव्रता" इति त्रिकाण्डशेषः। "कुम्भीनसः क्रूरसर्पे स्त्रियां लवणमातरि" इति मेदिनी।

एतादृगनेकप्रचलितशब्दायोगात् गभीरचिन्तया बहुना कालेन नितान्तकष्टेन च प्रसूतोऽयं श्लोक इत्यनुमीयते। शार्दूलविक्रीड़ितं वृत्तम् ॥२९॥

---

শম্বূক। মহারাজ! দেখুন দেখুন—

এই ক্রৌঞ্চাবতনামে পর্ব্বত দেখা যাইতেছে; ইহার কুঞ্জরূপ ক্ষুদ্র গৃহে অব্যক্তশব্দকারী পেচকগণের "ঘুঃ ঘুঃ" শব্দ সমন্বিত বংশস্তম্বের উক্ত শব্দে কাকগণ নীরব হইয়া রহিয়াছে, এবং এই পর্ব্বতে ইতস্ততঃ

अपि च, (ङ)

एते ते कुहरेषु गद्गदनदद्गोदावरीवारयो
मेघालम्बितमौलिनीलशिखराः (१) क्षोणीभृतो दक्षिणाः।
अन्योऽन्यप्रतिघातसङ्कुलचलत्कल्लोलकोलाहलै-
रुत्तालास्त इमे गभीरपयसः पुण्याः सरित्सङ्गमाः ॥३०॥

(ङ) अपि चेति। अपि च अन्यच्च वर्ण्यत इति शेषः। इत्यादावपिः समुच्चये।

एत इति। कुहरेषु गुहासु गद्गदं तादृगव्यक्तशब्दं यथा स्यात्तथा नदन्ति शब्दायमानानि गोदावर्य्या नद्या वारीणि जलानि येषु ते तथोक्ताः, तथा मेघैरालम्बिता आश्रिता मौलयो मस्तकानि येषां ते, अतएव नीलानि शिखराणि येषां ते, नानाधातुभिर्विचित्रशृङ्गा अपि प्रधानतो मेघवर्णपातात् नीलवर्णत्वेन प्रतीयमानशृङ्गा इत्यर्थः ते प्रसिद्धा एते दृश्यमाना दक्षिणाः भारतवर्षस्य दक्षिणदिग्वर्त्तिनः क्षोणीभृतः पर्वताः विद्यन्त इति शेषः। अन्योऽन्यं परस्परं यः प्रतिघात आघातस्तेन सङ्कुलम् उच्छृङ्खलं यथा स्यात्तथा चलन्तो ये कल्लोला महातरङ्गास्तेषां कोलाहलैः सङ्कीर्णशब्दैः उत्तालाः कराला भीषणा इति यावत् गभीरपयसः अगाधसलिलाः, पुण्याः पवित्राः, ते प्रसिद्धाः, इमे दृश्यमानाः, सरित्सङ्गमाः नदीसंयोगाः संयुक्तनद्य इत्यर्थः विद्यन्त इति शेषः।

अत्र शृङ्गाणां स्वकीयनानावर्णपरित्यागेन मेघालम्बितमौलित्वनिबन्धननीलगुणग्रहणात् तद्गुणालङ्कारः। तथा "वरीवारयोः" "क्षोणीक्षिणयो"श्च सकृत्साम्यात् छेकानुप्रासः, तथा प्रथमे पादे दकाराणाम्, द्वितीये लकाराणाम्, तृतीयेऽपि च लकाराणामसकृत् साम्यात् वृत्त्यनुप्रासश्च, इत्येतेषां संसृष्टिः। उत्ताला इत्यस्य लकारस्य तृतीयपादगतलकारसम्बन्धेन उक्तवृत्त्यनुप्रासघटकत्वं तेन च चतुर्थपादस्यापि स्पर्शात् न पतत्प्रकर्षतादोषः।

"मौलिः। मस्तकम्" इति शब्दकल्पद्रुमः। "उत्ताल उत्कटे श्रेष्ठे विकराले प्लवङ्गमे" इति मेदिनी।

---

ভ্রমণকারী ময়ূরগণের শব্দে ভীত হইয়া, ক্রুর সর্পগণ, পুরাতন চন্দন-বৃক্ষের স্কন্ধদেশে ( দোঠালা জায়গায় ) উঠিতেছে ॥২৯॥

---

(१) मेघालङ्कृत इति पाठभेदः।

ইতি নিষ্ক্রান্তাঃ সর্বে। (চ)

# ইতি পঞ্চবটীপ্রবেশো নাম দ্বিতীয়োঽঙ্কঃ। (ছ)

"ভাববিহিতঃ কৃত্প্রত্যয়ী দ্রব্যবত্প্রকাশতে" ইতি ন্যায়াৎ সরিত্সঙ্গমা ইত্যনেন সংযুক্তনদ্য ইতি প্রতীয়তে। শার্দূলবিক্রীড়িতং বৃত্তম্ ॥৩০॥

(চ) ইতীতি। রামস্য পুষ্পকবিমানপরিরক্ষকাঃ কেচিৎ কিঙ্করা আসন্ তে চ তত্রোপস্থিতা এবেতি তৈঃ সহ মিলিতয়ো রামশম্বূকয়োর্বহুত্বাৎ "নিষ্ক্রান্তাঃ সর্বে" ইতি বহুবচনং সর্বশব্দসঙ্গতিশ্চেতি। কেচিত্তু কবেঃ নারায়ণাবতারত্বেন রামস্য জ্ঞানেন গুরুত্বাৎ বহুবচনমিতি বদন্তি, তদসৎ, সর্বশব্দানর্থক্যস্য তাদবস্থ্যাৎ।

(ছ) ইতীতি। নাম, পঞ্চবটীপ্রবেশ ইতি নাম্না প্রকাশ্যঃ, দ্বিতীয়োঽঙ্কঃ সমাপ্ত ইতি শেষঃ।

"নাম কোপেঽভ্যুপগমে বিস্ময়ে স্মরণেঽপি চ। সম্ভাব্যকুৎসাপ্রাকাশ্যবিকল্পেষু চ দৃশ্যতে ॥" ইতি মেদিনী।

ইতি মহামহোপাধ্যায়-ভারতাচার্য্য-শ্রীহরিদাসসিদ্ধান্তবাগীশভট্টাচার্য্য-
বিরচিতায়ামুত্তররামচরিতটীকায়াং সর্বার্থবোধিনীসমাখ্যায়াং
দ্বিতীয়াঙ্কবিবরণং সমাপ্তম্ ॥০॥

---

(ঙ) আরও, এই দক্ষিণ দিকের সেই সকল পর্ব্বত দেখা যাইতেছে; ইহার গুহাতে গোদাবরী নদীর জল গদ্গদরূপ শব্দ করিতেছে এবং এই পর্ব্বতগুলির উপরিভাগ মেঘে আবৃত থাকায় শৃঙ্গগুলি নীলবর্ণ দেখা যাইতেছে। আর এই সেই সকল অগাধজল ও পবিত্র নদীসঙ্গম দৃষ্টিগোচর হইতেছে; ইহার বিশাল তরঙ্গসমূহ, পরস্পর প্রতিঘাতে উচ্ছৃঙ্খলভাবে চলিতে থাকায় তাহার কোলাহলে এই সঙ্গমগুলি ভয়ঙ্কর দেখা যাইতেছে ॥৩০॥

(চ) (ইহার পর সকলে চলিয়া গেল।)

(ছ) পঞ্চবটীপ্রবেশনামে দ্বিতীয় অঙ্ক সমাপ্ত ॥০॥

# तृतीयोऽङ्कः ।

—*(:)*—

ततः प्रविशति नदीद्वयं तमसा मुरला च । (क)

तमसा । सखि ! मुरले ! किमसि सम्भ्रान्तेव ? । (ख)

मुरला । भगवति ! तमसे ! प्रेषितास्मि भगवतोऽगस्त्यस्य पत्न्या लोपामुद्रया सरिद्वरां गोदावरीमभिधातुम्, जानास्येव यथा वधूत्यागात्प्रभृति—(ग)

अनिर्भिन्नो गभीरत्वा-(१) दन्तर्गूढ़घनव्यथः ।
पुटपाकप्रतीकाशो रामस्य करुणो रसः ॥१॥

---

(क) तत इति । नदीद्वयं नद्यधिष्ठातृदेवताद्वयम्, जलप्रवाहस्यैव नदीत्वेन रङ्गालये तत्प्रवेशासम्भवात् ।

(ख) तमसेति । किं कथं सम्भ्रान्तेव चकितेव अस्थिरमना इवेति यावत् ।

(ग) मुरलेति । भगवति ! माहात्म्यवति ! तमसायास्तीर्थत्वेनेदृक् सम्बोधनम्, सरिद्वरां नदीश्रेष्ठाम् । वधूत्यागात्प्रभृति भार्य्यायाः सीताया निर्वासनादवधि ।

"वधूर्जाया स्नुषा स्त्री च" इत्यमरः ।

प्रभृतीति श्लोकस्थरस इत्यतः परमस्तीत्यध्याहर्त्तव्यायाः क्रियाया विशेषणम् ।

---

(क) তদনন্তর তমসা ও মুরলানামক নদীদ্বয়ের প্রবেশ ।

(খ) তমসা । সখি ! মুরলে ! তুমি ব্যস্তের ন্যায় হইয়াছ কেন ? ।

(গ) মুরলা । ভগবতি ! তমসে ! নদীশ্রেষ্ঠা গোদাবরীকে বলিবার জন্য ভগবান্ অগস্ত্যের পত্নী লোপামুদ্রাকর্ত্তৃক আমি প্রেরিত হইয়াছি । জানই ত যে, ভার্য্যা পরিত্যাগের পর হইতে—

---

(१) अनिर्भिन्नगभीरत्वादिति क्वचित् पाठः ।

तेन च तथाविधेष्टजनकष्टपातजन्मना प्रकर्षगतेन दीर्घशोकसन्तानेन सम्प्रत्यतितरां (१) परिक्षीणो रामभद्रः, तमवलोक्य कम्पितमिव मे हृदयम्, अधुना च प्रतिनिवर्त्तमानेन रामभद्रेण नियतमेव पञ्चवटीवने बधूसहनिवासविस्रम्भसाक्षिणः प्रदेशा

अनिर्भिन्न इति । गभीरत्वात् गाम्भीर्य्यात् धैर्य्यातिशयादित्यर्थः, पक्षे गाढ़लिप्तत्वादित्यर्थः, अनिर्भिन्नः अप्रकाशितः अन्यैरज्ञात इति यावत् पक्षे अविदीर्णः अतएव अन्तः हृदये, गूढा संवृता, घना निविड़ा गाढ़ा इति यावत् व्यथा वेदना यस्य स तथोक्तः, अप्रकाशमानः शोको नाधिकं पीड़यतीति भावः । पक्षे अन्तर्मध्ये गूढ़ा गुप्ता घना गाढ़ा व्यथा तापो यस्य सः । पुटे पत्रादिनिर्म्मिताधारविशेषे पाकः पचनं यस्य सः पुटपाकः पारदाद्यौषधं स प्रतीकाश उपमा यस्य स तथोक्तः रामस्य करुणो रसः सीताविरहजनितशोक इत्यर्थः । अस्तीति शेषः । रामः सीतां स्वयं निर्वास्य तच्छोकं विवरीतुमपि न शक्नोति तेनासह्ययन्त्रणाञ्चानुभवतीत्यर्थः ।

अत्र पूर्णोपमालङ्कारः । 'करुणो रस' इत्यभिधानात् रसस्य स्वशब्दोक्तिदोषः "रसस्योक्तिः स्वशब्देन" इति साहित्यदर्पणात् ; स तु 'दशा रामस्य दारुणा' इति पाठेन समाधेयः ।

"स्युरुत्तरपदे त्वमी । निभसङ्काशनीकाशप्रतीकाशोपमादयः" इत्यमरः । पुटपाक उक्तो भावप्रकाशे—

"पुटपाकस्य पाकोऽयं लेपस्याङ्गारवर्णता ।
लेपञ्च द्वाङ्गुलं स्थूले कुर्य्याद्द्वाङ्गुलिमात्रकम् ॥
काश्मीरवटजम्बादिपत्रैर्वेष्टनमुत्तमम् ।
पलमात्रो रसो ग्राह्यः कर्षमात्रं मधु क्षिपेत् ॥" इत्यादि ॥१॥

গাম্ভীর্য্যবশতঃ রামের শোক, পুটপাকের ন্যায় বাহিরে প্রকাশ পাইতেছে না বটে ; কিন্তু ভিতরে তাহার প্রগাঢ় বেদনা গুপ্তভাবে চলিতেছে ॥১॥

(१) नितरां इति पाठान्तरम् ।

द्रष्टव्याः, तेषु च निसर्गधीरस्याप्येवंविधायामवस्थायामतिगम्भीरा-भोगशोकक्षोभसंवेगात् पदे पदे महान्ति प्रमादस्थानानि शङ्क-नीयानि रामभद्रस्य, तद्भगवति! गोदावरि! तत्र त्वया सावधानया भवितव्यम्। (घ)

(घ) तेनेति। किञ्चेति चार्थः। तेन पुटपाकप्रतीकाशेन, तथाविधस्तादृशः निर्वासनोत्पन्न इत्यर्थः य इष्टजनस्य वल्लभजनस्य सीतायाः कष्टपातः दुःखोपस्थितिः तस्माज्जन्म यस्य तेन, सीताया निर्वासनकृतमरणजनितेनेत्यर्थः, प्रकर्षगतेन प्रकृष्टेन वृद्धिं प्राप्तेनेत्यर्थः, दीर्घशोकसन्तापेन बहुकालव्यापिनिरवच्छिन्नशोकपरम्परया। अतितरां नितान्तम्, परिक्षीणः कृशशरीरः सञ्जातः। तं रामभद्रम् अवलोक्य स्थिताया इति शेषः, मे मम लोपामुद्रायाः हृदयं कम्पितमिव दारुणरोगोत्पत्त्यादिशङ्कया विचलितमिव। प्रतिनिवर्त्तमानेन अगस्त्याश्रमात् गतेन। नियतमेव निश्चितमेव। वध्वा भार्य्यया सीतया सहनिवासे एकत्रावस्थाने ये विस्रम्भाः विश्वासाः स्वच्छन्दविहारादिविश्वस्तव्यवहारा इत्यर्थः, तेषां साक्षिणो द्रष्टारः, प्रदेशाः स्थानानि, द्रष्टव्याः दृश्येरन्। इत्यवश्यं सम्भाव्यत इति भावः। ननु द्रष्टव्याः सन्तु, तेन किमित्याह, तेषु च प्रदेशेषु निसर्गधीरस्यापि, चञ्चल-चेतसः का कथा स्वाभाविकधैर्य्यसम्पन्नस्यापि रामभद्रस्य एवंविधायामवस्थायां सीताविरहेण एकाकिभ्रमणरूपायां दशायाम्। अतिगम्भीरः अनन्तत्वात् दुष्प्रापः आभोगः सीमा यस्य सः, असीम इत्यर्थः यः शोकः, तेन यः क्षोभ उद्वेलनम् अधीरतेति यावत् तस्य संवेगात् प्रतिघातात्, पदे पदे स्थाने स्थाने, महान्ति अशेषाणि, प्रमादस्थानानि अनवधानताविषयाः मूर्च्छाप्राप्त्यादय इत्यर्थः शङ्कनीयानि आशङ्क्यन्ते अस्माभिरिति शेषः। तत्तस्मात् रामभद्र-स्यानर्थघटनायाः सम्भावनासत्त्वादित्यर्थः। तत्र तेषु रामस्य भ्रमणस्थानेष्वित्यर्थः। सावधानया रामस्य विपन्निवारणविषये एकाग्रचित्तया, भवितव्यं भूयेत।

(ঘ) সেইরূপ প্রিয়জনের দুঃখোপস্থিতি হইতে উৎপন্ন, বৃদ্ধিপ্রাপ্ত এবং সুদীর্ঘ সেই নিরবচ্ছিন্ন শোকে, সম্প্রতি রামভদ্র অত্যন্ত ক্ষীণ হইয়া গিয়াছেন ; তাঁহাকে দেখিয়া আমার হৃদয় যেন কম্পিত হইয়া উঠিয়াছে ; পঞ্চবটীবনে বধূর সহিত অবস্থানকালে বিশ্বাসবশতঃ যে সকল ঘটনা

वीचीवातैः शीकरक्षोदशीतैराकर्षद्भिः पद्मकिञ्जल्कगन्धान्।
मोहे मोहे रामभद्रस्य जीवं स्वैरं स्वैरं प्रेषितैस्तर्पयेति ॥२॥

तमसा। उचितमेव दाक्षिण्यं स्नेहस्य, सञ्जीवनोपायस्तु मौलिक एव रामभद्रस्याद्य सन्निहितः। (ङ)

---

ननु जलरूपया मया सावधानया सत्यापि किं कर्त्तव्यमित्याह वीचीति। शीकर-क्षोदेन जलविन्दुचूर्णेन शीतैः शीतलैः तथा पद्मकिञ्जल्कगन्धानाकर्षद्भिः आकृष्य वहद्भिरित्यर्थः; तथा स्वैरं स्वैरं प्रेषितैः मन्दं मन्दं प्रेरितैः शैत्यं सौगन्ध्यं मान्द्यञ्चेति वायोर्गुणत्रयं तेन गुणत्रयेणैव विशिष्टैरिति भावः वीचीवातैः स्वकीयतरङ्गवायुभिः मोहे मोहे सकलमूर्च्छितावस्थायां जीवं जीवनं तर्पय प्रीणय, यदा यदैव रामस्य मूर्च्छा भवेत्, तदा तदैव तादृशैस्तरङ्गवायुभिस्तस्य चैतन्यं प्रतिपादयेत्यर्थः। इति इत्यन्तं गोदावरीमभिधातुं प्रेषितास्मीति पूर्वेणान्वयः।

अत्र चैतन्योत्पादनं प्रति वायोः शीतलत्वमेव कारणत्वेनापेक्षितं किन्तु सौगन्ध्यमान्द्ययोरपि विशेषकारणान्तरयोरुपादानात् गुणयौगपद्याच्च समुच्चयालङ्कारः।

"शीकरोऽम्बुकणः स्मृतः।" "चूर्णे क्षोदः।" "मन्दस्वच्छन्दयोः स्वैर"मिति चामरः।
वीची इति "इतश्च क्तिवर्जितादि"ति वीचिशब्दादीप्रत्ययः।
मालिनी वृत्तम् ॥२॥

---

ঘটিয়াছিল, তাহার সাক্ষীস্থানগুলিকে রামভদ্র অবশ্যই দেখিবেন, স্বভাবতঃ ধীরপ্রকৃতি হইলেও সেই সকল স্থানে রামভদ্রের এইরূপ অবস্থায় অসীম শোকের ক্ষোভে ও আবেগে পদে পদে গুরুতর বিপদের আশঙ্কা করিতে হয়। অতএব ভগবতি! গোদাবরি! তুমি সেখানে সাবধান হইবে।

জলবিন্দুর চূর্ণ বহন করায় শীতল, পদ্মকেশরের সৌরভবাহী এবং মন্দ মন্দ প্রেরিত তরঙ্গ-বায়ুদ্বারা প্রত্যেক মূর্চ্ছাতে রামভদ্রের চৈতন্য সম্পাদন করিবে ॥২॥

मुरला। कथमिव?। (च)

तमसा। श्रूयताम्—पुरा किल वाल्मीकितपोवनोपकण्ठात् परित्यज्य गते लक्ष्मणे सीतादेवी प्राप्तप्रसववेदना आत्मानमतिदुःखसंवेगाद्‌गङ्गाप्रवाहे निक्षिप्तवती, तदैव तत्र दारकद्वयं प्रसूता, भगवतीभ्यां पृथ्वीभागीरथीभ्यामभ्युपपन्ना रसातलञ्च नीता, स्तन्यत्यागात् परेण च तद्दारकद्वयं तस्याः प्राचेतसस्य महर्षेर्गङ्गादेवी स्वयमर्पितवती। (छ)

---

(ङ) तमसेति। दाक्षिण्यम् औदार्य्यम् औदार्य्येणानुकूल्यमित्यर्थः। रामं प्रति परमस्नेहवती लोपामुद्रा तदानुकूल्यं कर्त्तुमिच्छति, कुरुताम्; किन्तु तस्याद्यविशेषप्रयोजनं नास्तीति भावः। कुत इत्याह, तु किन्तु मौलिक एव न तु कृत्रिम इत्यर्थः, रामभद्रस्य सञ्जीवनोपायः चैतन्यप्रतिपादनहेतुः सन्निहितः निकटवर्त्ती स्थितः। सन्निहिता सीता, सैव सञ्जीवयिष्यतीति भावः।

(च) मुरलेति। कथमिव, कीदृशः सञ्जीवनोपायः सन्निहित इत्यर्थः।

(छ) तमसेति। किलेति पूर्ववृत्तान्तसूचकमव्ययम्। उपकण्ठात् निकटात्। परित्यज्य सीतामिति शेषः। प्राप्ता उपस्थिता प्रसववेदना यस्याः सा, अतएव अतिदुःखसंवेगात् नितान्तकष्टप्रतिघातात् आत्मानं स्वदेहम्। तदैव निक्षेपानन्तरमेव, तत्र गङ्गाप्रवाहे दारकद्वयं बालकयुगलम्, प्रसूता प्रसूतवती। पृथ्वी-भागीरथीभ्यां पृथिवीगङ्गाभ्याम् अभ्युपपन्ना प्राप्ता गृहीता सतीत्यर्थः रसातलं पातालं नीता बालकाभ्यां सह सीतेति शेषः। स्तन्यस्य दुग्धस्य त्यागो यस्मिन् वयसि तत् स्तन्यत्यागं वयः तस्मात् परेण वर्षद्वयवयसः परमित्यर्थः। तस्याः सीतायाः तद्दारकद्वयम्। महर्षेः प्राचेतसस्य वाल्मीकेः

---

(ঙ) তমসা। স্নেহের উদারতাবশতঃ আনুকূল্য করা উচিতই বটে; কিন্তু আজ রামভদ্রের চৈতন্য সম্পাদন করিবার মূল উপায়ই নিকটে আছে।

(চ) মুরলা। কি রকম?।

मुरला। सविस्मयम्।

ईदृशानां विपाकोऽपि जायते परमाद्भुतः (१)।
यत्रोपकरणीभावमायात्येवंविधो जनः ॥३॥

समीपे इत्यर्थः। गङ्गादेवी स्वयम् आत्मना, न त्वन्यद्वारेत्यर्थः। एतेन बालकद्वयं प्रति गङ्गाया आग्रहातिशयः सूच्यते।

"वार्त्ता सम्भाव्ययोः किल।" "आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च।" "दारको बालभेदका"विति चामरः।

प्रसूतेति आदिकर्म्मणि कर्त्तरि क्तः। परेणेति तृतीयापवर्गे। प्राचेतसस्येति सामीप्य-सम्बन्धे षष्ठी, दारकद्वये गङ्गायाः स्वत्वाभावेन तद्दानाभावात् न चतुर्थी।

ईदृशानामिति। ईदृशानां सीतारामतुल्यमहाशयचरित्रानां जनानां विपाकोऽपि सम्पदि का कथा विपदपि, परमाद्भुतो जायते। कथमित्याह यत्र विपाके एवंविधः पृथिवीगङ्गातुल्यजनः उपकरणीभावं साहाय्यकारकत्वम् आयाति प्राप्नोति। चिराराधनयापि ययोः सन्दर्शनं न घटते, ते एव पृथिवीगङ्गे स्वयमेव साहाय्यं कुरुत इति विपाकस्य परमाद्भुतत्वमेवेति भावः।

अत्र परमाद्भुतत्वं प्रति परार्द्धवाक्यार्थो हेतुरिति काव्यलिङ्गमलङ्कारः।

---

(ছ) তমসা। শোন, পূর্ব্বে লক্ষ্মণ সীতাদেবীকে বাল্মীকির তপো-বনের নিকটে পরিত্যাগ করিয়া চলিয়া গেলে, সীতাদেবীর প্রসববেদনা উপস্থিত হয়; তখন তিনি অত্যন্ত দুঃখের আবেগে আপনাকে গঙ্গার স্রোতে নিক্ষেপ করেন এবং তখনই সেইখানে দুইটী বালক প্রসব করেন; সেই সময়ে ভগবতী পৃথিবী ও গঙ্গা, (বালক দুইটীর সহিত) সীতাকে ধরিয়া পাতালে নিয়া যান; স্তন্য দুগ্ধ পরিত্যাগের পর তাঁহার সেই বালক দুইটীকে স্বয়ং গঙ্গাদেবী, মহর্ষি বাল্মীকির নিকটে সমর্পণ করিয়া যান।

---

(१) पावनाद्भुत इति पाठान्तरम्।

तमसा। इदानीन्तु शम्बूकवृत्तान्तेनानेन सम्भावितजनस्थानागमनं रामभद्रं सरयूमुखादुपश्रुत्य भगवती भागीरथी यदेव भगवत्या लोपामुद्रया स्नेहादाशङ्कितम्, तदेवाशङ्क्य सीतासमेता केनचिदिव गृहाचारव्यपदेशेन गोदावरीं विलोकयितुमागता। (ज)

---

"विपाकः दुर्गतिः।" "उपकरणं प्रधानाङ्गीभूतोपकारकद्रव्यम्।" इति च शब्दकल्पद्रुमः ॥२॥

(ज) तमसेति। भगवती भागीरथी गङ्गा, अनेन अचिरसङ्घटितेन शम्बूकवृत्तान्तेन शम्बूकवधव्यापारेणेत्यर्थः सम्भावितम् अनुमितं जनस्थाने आगमनं यस्य तम्। सरयूर्नाम काचिन्नदी तस्या मुखादुपश्रुत्य शम्बूकवधाय रामो जनस्थानमागमिष्यतीति सम्भाव्यत इति सरयूमुखादाकर्ण्येत्यर्थः। तदेव रामस्यानिष्टमेव। सीतासमेता सीतया सह मिलिता भागीरथीत्यस्य विशेषणमेतत्। गृहाचारव्यपदेशेन लौकिकव्यवहारच्छलेन। लोके हि बन्धुजनो वत्सरान्ते अपरबन्धुजनानां साक्षात्काराय तद्गृहमागच्छतीति व्यवहारः प्रायेण प्रचलति।

श्रुधातोः शाब्दबोधे शक्तिरिति नैयायिकाः, श्रवणेन्द्रियजन्यप्रत्यक्षे शक्तिरिति मीमांसकाः; अत्र तु नैयायिकमतानुसारेण रामभद्रम् उपश्रुत्येति सङ्गतिरिति संक्षेपः।

---

মুরলা। ( বিস্ময়ের সহিত ) এইরূপ লোকের বিপদও, মহা অদ্ভুতরূপে উৎপন্ন হয়, যে বিপদে এইরূপ লোক, সাহায্যকারিতা প্রাপ্ত হন ॥৩॥

(জ) তমসা। কিন্তু এখন এই শম্বূকের ঘটনায় জনস্থানে রামভদ্রের আগমনের সম্ভাবনা করি ; ইহা সরযূনদীর মুখে শুনিয়া ভগবতী গঙ্গাদেবী, স্নেহবশতঃ ভগবতী লোপামুদ্রা যাহা আশঙ্কা করিয়াছেন, তাহাই আশঙ্কা করিয়া, সীতার সহিত, গৃহাচারচ্ছলে গোদাবরীকে দেখিতে আসিয়াছেন।

मुरला। सुविचिन्तितं भगवत्या, राजधानीस्थितस्य खलु तैस्तैर्जगतामाभ्युदयिकैः कार्य्यैर्व्यापृतस्य नियताश्चित्तविक्षेपाः; अव्यग्रस्य पुनरस्य शोकमात्रद्वितीयस्य पञ्चवटीप्रवेशो महाननर्थ इति, तत्कथमिदानीं सीतादेव्या रामभद्र आश्वासनीयः स्यात्?। (झ)

(झ) मुरलेति। भगवत्या गङ्गया सुविचिन्तितं सम्यग्विवेचितम्। कथं सुविचिन्तितमित्याह राजेत्यादि। राजधानीस्थितस्य अयोध्यायां निवसतः, तैस्तैः प्रसिद्धैरवश्यकर्त्तव्यैरित्यर्थः। आभ्युदयिकैः उन्नतिसाधकैः कार्य्यैः दुष्टनिग्रहशिष्टानुग्रहराष्ट्रदुर्गबलादिपर्य्यवेक्षणप्रभृतिभिर्व्यापारैः व्यापृतस्य आसक्तचित्तस्य रामभद्रस्येति शेषः चित्तविक्षेपाः शोकेनाकर्षणानि नियताः नियन्त्रिता निरुद्धा इति यावत्। रामे राजधानीस्थिते सर्वदा राजकार्य्यपर्य्यवेक्षणादिचिन्तया परिपूर्णे तस्य चित्ते सीताविरहजनितशोकः प्रवेष्टुं नावसरं लभत इत्यर्थः। पुनः किन्तु अव्यग्रस्य राजकार्य्यादिचिन्तायामनासक्तचित्तस्य सुस्थचित्तस्येति यावत् शोकमात्रद्वितीयस्य केवलशोकसहचरस्य अस्य रामभद्रस्य। अनर्थः अनिष्टम् अनिष्टकारणमित्यर्थः। इति इतिहेतोः भगवत्या सुविचिन्तितमित्यर्थः। चिन्तान्तरशून्ये सुस्थचित्त एव शोकाविर्भावः स्यात्, शोकोद्दीपकपञ्चवटीवनप्रवेशे तु का कथेति भावः। तत्तस्मात् पञ्चवटीप्रवेशस्यैवानर्थहेतुत्वादित्यर्थः। आश्वासनीयः स्यात् सान्त्वयितुं शक्यः स्यादित्यर्थः। चरित्रदोषाशङ्कया स्वयं निर्वासितायाः सीतायाः पुनरधिकक्रोधोदयाशङ्कया रामस्य समीपगमनासम्भवेन सान्त्वनाकरणमसम्भवमेवेति कथं गङ्गा सीतामानीतवतीति मया पुनरिदं सन्दिह्यते, गङ्गया तु आत्मबुद्ध्या सुविचिन्तितमेवेति भावः।

"व्यग्रो व्यासक्त आकुल" इत्यमरः।

राजा धीयते अस्यामिति राजधानी "करणाधिकरणयोश्चे"त्यधिकरणे ल्युट्।

---

(ঝ) মুরলা। ভগবতী গঙ্গাদেবী ভাল বিবেচনা করিয়াছেন; কারণ, রামচন্দ্র রাজধানীতে থাকিবার সময় জগতের উন্নতিকর সেই সেই কার্য্যে ব্যাপৃত থাকেন বলিয়া তাঁহার মনের ক্ষোভ অবরুদ্ধ থাকে;

तमसा। उक्तमेव (१) भगवत्या भागीरथ्योदेव्या, यद्देव-यजनसम्भवे! सीते! अद्य खल्वायुष्मतोः कुशलवयोर्द्वादशजन्म-संवत्सरस्य (२) संख्यामङ्गलग्रन्थिरभिबध्यते, (३) तदात्मनः पुराणश्वशुरमेतावतो मानवस्य राजर्षिवंशस्य प्रसवितारं सवितारमपहतपाप्मानं देवं स्वहस्तावचितैः पुष्पैरुपतिष्ठस्व।

(ञ) तमसेत्यादि। उक्तमेवेति एवशब्दः स्वयोगव्यवस्थापनार्थः। किमुक्तमित्याह यदित्यादि। द्वादशानां पूरण इति द्वादशः, स चासौ जन्मसंवत्सरश्चेति विग्रहः, तस्य, जन्मवत्सरावधिद्वादशपूरणीभूतवत्सरस्येत्यर्थः संख्यायै वयसो वर्षसंख्यायै मङ्गलजननाय ग्रन्थिः संख्यामङ्गलग्रन्थिः, जन्मावधि यावन्तो वत्सरा यातास्तावत्संख्याबोधनाय मङ्गलजननाय च धर्म्मशास्त्रोक्तो यो ग्रन्थिः स इत्यर्थः। अभिबध्यते वाल्मीकिनेति शेषः। तत्तस्मात् अस्यां कुशलवयोर्जन्मतिथौ सर्वेषामेव जन्तूनां मङ्गलाचरणस्य कर्त्तव्यत्वादित्यर्थः। आत्मनः स्वस्याः तवेत्यर्थः। पुराणश्वशुरं प्राचीनश्वशुरं परम्परया श्वशुरमित्यर्थः। एतावत इयत्-संख्यस्य, मानवस्य वैवस्वतमनोरपत्यस्य। सूर्य्यपुत्रो वैवस्वतमनुस्तत्पुत्र इक्ष्वाकुस्तस्माच्च रामचन्द्रवंश उत्पन्न इति बोध्यम्। प्रसवितारम् उत्पादयितारम्। अपहतो नाशितः पाप्मा पापं येन तम् एतेन सूर्य्यस्य महामाहात्म्यवत्त्वेन पूज्यत्वमिति भावः। सवितारं देवं

কিন্তু কার্য্যান্তরে অব্যাপৃত অবস্থায় কেবল শোকসহায়ে উঁহার পঞ্চবটী-বনে প্রবেশ, গুরুতর বিপদের কারণ। তবে এখন সীতাদেবী রামভদ্রকে আশ্বস্ত করিবেন কি প্রকারে? ।

(ঞ) তমসা। ভগবতী গঙ্গাদেবী ত বলিয়াছেনই যে, হে যজ্ঞভূমি-সমুৎপন্নে! সীতে! আজ আয়ুষ্মান্ কুশ ও লবের জন্ম হইতে দ্বাদশ বৎসরের মাঙ্গলিক সংখ্যাগ্রন্থি বাঁধা হইতেছে; অতএব তুমি নিজহস্ত-সঞ্চিত পুষ্পদ্বারা, নিজের প্রাচীন শ্বশুর, বৈবস্বত মনুর সন্তান, এই সকল

(१) अव इति क्वचिदधिकः पाठः।

(२) क्वचित् जन्मपदं नास्ति। (३) अभिवर्त्तते इति क्वापि पाठः।

न च त्वामवनिपृष्ठवर्त्तिनीमस्मत्प्रभावाद्वनदेवता अपि द्रक्ष्यन्ति किं पुनर्मर्त्त्या इति ; अहञ्चाज्ञापिता—तमसे ! त्वयि प्रकृष्टप्रेमैव बधूर्वत्सा जानकीति अतस्त्वमेवास्याः प्रत्यन्तरीभवेति । साहमधुना यथादिष्टमनुतिष्ठामि । (ञ)

सूर्य्यदेवम् । उपतिष्ठस्व आराधय हि । कुशलवयोर्मङ्गलार्थं सूर्य्यपूजनायैव सीतामानीतवती गङ्गा, न तु रामस्य सान्त्वनार्थमिति मुरलाया उक्तवाक्योत्तरविषये भावः । गूढ़भावस्तु, सीतां प्रति परमविश्वासशाली रामः सीतासम्पर्कं प्राप्य न कोपिष्यति, अपि तु आदरिष्यत एव सान्त्वितश्च भवेदिति । ननु पुष्पावचयनकाले लोका मामवलोक्य चेत् रामाय निवेदयिष्यन्ति तदा महाननर्थो भवेदित्याह न चेत्यादि । न चेत्यस्य द्रक्ष्यन्तीत्यनेनान्वयः । अवनिपृष्ठवर्त्तिनीं भूतलस्थितां सतीम् । अस्मत्प्रभावात् मम वरमाहात्म्यादित्यर्थः । मर्त्त्या मानवाः । इतिशब्दस्य उक्तमिति पूर्वेणान्वयः । प्रकृष्टप्रभावशालिनीनां वनदेवतानां दर्शनायोग्यायास्तव साधारणमानवैर्दर्शनमसम्भवमेवेति भावः । अहं तमसा । प्रकृष्टप्रेमा परमस्नेहवती । बधूः स्नुषा । रामेण मातृत्वेन स्वीकृतायाः गङ्गायाः सीता स्नुषैव स्यादिति द्रष्टव्यम् । इति जानामीति शेषः । अन्तरस्य आत्मीयस्य सख्यादेः प्रति प्रतिनिधिरिति प्रत्यन्तरी सखीसदृशीत्यर्थः सखीव सीतायाः सहचारिणी भवेत्यर्थः । इतिशब्दस्य आज्ञापितेत्यनेनान्वयः । सा गङ्गया आज्ञापिता । आदिष्टम् आदेशमनतिक्रम्येति यथादिष्टं सीतायाः सहचारित्वमित्यर्थः । अनुतिष्ठामि करोमि, सीतायाः सहचारिणी भवामीत्यर्थः ।

"अन्तरमवकाशावधि परिधानान्तर्धिभेदतादर्थ्ये । छिद्रात्मीयविनावहिरवसरमध्येऽन्तरात्मनि च ॥" "प्रति प्रतिनिधौ वीप्सालक्षणादौ प्रयोगत" इति चामरः ।

¹ उपतिष्ठस्वेति "पद्याराधनयोश्चे"ति रुचादित्वादात्मनेपदम् ।

जन्मतिथौ जन्मग्रन्थिबन्धनस्य सूर्य्यपूजायाश्च प्रमाणं यथा कृत्यचिन्तामणौ—

"गुड़दुग्धतिलानद्याज्जन्मग्रन्थेश्च बन्धनम् ।
गुग्गुलं निम्बसिद्धार्थदूर्वागोरोचनान्वितम् ।
सम्पूज्य भानुविघ्नेशौ महर्षिं प्रार्थयेदिदम् ॥"

मुरला। अहमप्यमुं वृत्तान्तं भगवत्यै लोपामुद्रायै निवेदयामि, रामभद्रोऽप्यागत एवेति तर्कयामि। (ट)

तमसा। तदियं गोदावरीह्रदान्निष्क्रम्य—(ठ)

परिपाण्डु दुर्बलकपोलसुन्दरं
दधती विलोलकवरीकमाननम्।
करुणस्य मूर्त्तिरथवा (१) शरीरिणी
विरहव्यथेव वनमेति जानकी ॥४॥

---

"समित्पुष्पकुशादीनि श्रोत्रियः स्वयमाहरेत्" इत्येकादशीतत्त्वधृतपद्मपुराणात् श्रोत्रिय-पदस्य चोपलक्षणत्वात् स्वहस्तावचितैः पुष्पैरित्युक्तम्।

(ट) मुरलेति। अमुं वृत्तान्तं सीतया सह गङ्गाया आगमनवार्त्ताम्। तर्कयामि सम्भावयामि।

(ठ) तमसेति। सा चासौ इयञ्चेति तदियं सेयमित्यर्थः, एकवाक्यान्तर्गततया श्लोकस्थजानकीत्यस्य विशेषणमेतत्। गोदावर्य्यां कश्चित् निम्नदिग्गामी ह्रदो गर्त्तमासीत् तस्मान्निष्क्रम्य उत्थाय।

परीति। परिपाण्डु पुष्टिकरभोजनाभावात् रक्ताल्पत्वेन श्वेतच्छायौ दुर्बलौ अगाढ़ौ

---

রাজর্ষিবংশের উৎপাদয়িতা এবং পাপনাশক সূর্য্যদেবকে পূজা কর; কিন্তু তুমি ভূতলের উপরে থাকিলেও তোমাকে আমার প্রভাবে বন-দেবতারাও দেখিতে পাইবেন না, মানুষের কথা আর কি বলিব; আর আমাকেও আদেশ করিয়াছেন যে, তমসে! বৎসা বধূ সীতা, তোমার প্রতি বিশেষ সৌহার্দ্দশালিনী; সুতরাং তুমিই উহার সহচারিণী হও। সেই আমি এখন, তাঁহার আদেশমত কার্য্য করি।

(ট) মুরলা। আমিও, এই বৃত্তান্ত ভগবতী লোপামুদ্রাকে যাইয়া জানাই। রামভদ্রও, আসিতেছেন বলিয়াই আমি মনে করি।

---

(१) इव वा इति क्वापि पाठः।

मुरला। इयं हि सा। (ड)

यौ कपोलौ सन्तौ ताभ्यां सुन्दरं स्वभावसुन्दर्य्याः सीताया विरहकृशतायामपि सत्यां मुखस्य किञ्चिदागन्तुकत्वे चित्रमेव जातमिति भावः। विलोला बन्धनाभावेन लम्बमानत्वात् चञ्चला कबरी केशरचना यत्र तत् तादृशम् आननं मुखं दधती धारयन्ती जानकी सीता, करुणस्य शोकस्य मूर्त्तिरिव मूर्त्तिमान् शोक इव, अथवा शरीरिणी मूर्त्तिमती विरहव्यथा रामविच्छेदवेदनेव वनं पञ्चवटीवनम् एति आगच्छति।

अत्र दुर्ब्बलकपोलात् कृशीकत्वोत्पत्तिसम्भवे सौन्दर्य्योत्पत्तेर्विषमालङ्कारः, तथा भावाभिमानि वाच्यं गुणोत्प्रेक्षाद्वयञ्चेत्येतेषां नैरपेक्ष्येण स्थितेः संसृष्टिः।

एतदनुरूपश्लोको यथा शाकुन्तले—

"वसने परिधूसरे वसाना नियमक्षाममुखी धृतैकवेणी।
अति निष्करुणस्य शुद्धशीला मम दीर्घं विरहव्रतं बिभर्त्ति॥"

अनयोस्तु "परिपाण्डुदुर्ब्बले"त्यादिश्लोक एव प्रशस्यतरः उत्प्रेक्षाद्वयेन सम्पूर्णयोग्यविरहावस्थाया व्यञ्जकत्वेन चमत्कारविशेषावहत्वात्।

पतिविरहे पतिव्रताया अवस्थामाह शुद्धितत्त्वधृतमङ्गिरोवचनम्—

"आर्त्तार्त्ते मुदिता हृष्टे विशोगे मलिना कृशा।
मृते म्रियेत या पत्यौ साध्वी ज्ञेया पतिव्रता॥"

मञ्जुभाषिणी वृत्तम्॥४॥

(ड) मुरलेति। इयं हि, इयमेव सा जानकी। जानकीं विलोक्य मुरलाया निरूपणमेतत्।

---

(ঠ) তমসা। এই সেই সীতাদেবী, গোদাবরীহ্রদ হইতে নির্গত হইয়া, অত্যন্ত শুভ্রবর্ণ অথ চ দুর্ব্বল কপোলযুগলদ্বারা মনোহর এবং চঞ্চল কবরীযুক্ত মুখমণ্ডল ধারণকরতঃ শোকের মূর্ত্তি অথবা মূর্ত্তিমতী বিরহ-বেদনার ন্যায় বনে আসিতেছেন॥৪॥

(ড) মুরলা। ইনিই সেই সীতাদেবী।

किसलयमिव मुग्धं बन्धनाद्विप्रलून
हृदयकुसुमशोषी दारुणो दीर्घशोकः।
ग्लपयति परिपाण्डु क्षाममस्याः शरीरं
शरदिज इव घर्म्मः केतकीगर्भपत्रम् ॥५॥

इति परिक्रम्य निष्क्रान्ते। (ढ)

## विष्कम्भकः। (ण)

किसलयेति। हृदयमेव कोमलत्वात् कुसुमम्, तत् शोषयतीति हृदयकुसुमशोषी दारुणो दीर्घः बहुकालव्यापी शोकः विरहकृतशोकः बन्धनात् वृन्तात् विप्रलूनं खण्डितं मुग्धं मनोहरं किसलयं पल्लवमिव स्थितम् अस्याः सीतायाः परिपाण्डु नितान्तश्वेतच्छायं क्षामं कृशं शरीरं शरदिजः शरत्कालोत्पन्नो घर्म्म आतपः केतक्याः केतकीपुष्पस्य गर्भपत्रं मध्यस्थितपर्णमिव कोशरमिवेत्यर्थः ग्लपयति मलिनीकरोति।

अत्र शोषणं रसनाशकरणम्, तच्च कुसुमस्यैव सम्भवति न तु हृदयस्य तेन शोषीतिपदं रूपकस्य साधकम् उपमाया बाधकं ततश्च हृदये कुसुमत्वारोपस्य शाब्दत्वात् शोके आतपत्वारोपस्य चार्थत्वात् एकदेशविवर्त्ति रूपकमलङ्कारः उपमाद्वयेन सङ्कीर्य्यते।

क्षाममिति क्षै धातोः क्तप्रत्ययस्य "क्षैशुषिपचां मकवा" इत्यनेन मत्वम्। शरदिज इति "प्रायेण सप्तम्याः कृतो"ति सप्तम्याः अलुक्। मालिनी वृत्तम् ॥५॥

(ढ) इतीति। निष्क्रान्ते तमसामुरले इति शेषः।

(ण) विष्कम्भक इति। तल्लक्षणमुक्तम्। अत्र प्रेषितास्मीत्यादिना वृत्तकथांशानां

---

শরৎকালোৎপন্ন গ্রীষ্ম যেমন কেতকীপুষ্পের ভিতরের পত্রকে মলিন করে; সেইরূপ হৃদয়পুষ্পের শোষণকারী, দারুণ ও দীর্ঘকালব্যাপী শোক, শাখা হইতে বিচ্ছিন্ন ও মনোহর পল্লবের ন্যায় অত্যন্ত শ্বেতবর্ণ এবং ক্ষীণ ইহার দেহখানিকে মলিন করিয়াছে ॥৫॥

(ঢ) ( ইহার পর উভয়ে কতিপয় পদক্ষেপ করিয়া চলিয়া গেল। )

(ণ) বিষ্কম্ভক।

नेपथ्ये। प्रमादः प्रमादः। (त)

ततः प्रविशति पुष्पावचयव्यग्रहस्ता सकरुणौत्सुक्यमाकर्णयन्ती सीता। (थ)

---

निदर्शनं "साहमधुना यथादिष्टमनुतिष्ठामि" इत्यादिना च वर्त्तिष्यमाणकथांशानां निदर्शनमिति द्रष्टव्यम्।

(त) नेपथ्य इति। प्रमादोऽनवधानता विधातुरित्याक्षेपः। कथमन्यथा प्रबलो दुर्बलमाक्रामतीति भावः। अथवा प्रमादो विपत्तिः। लोके 'प्रमाद उपस्थित' इत्यादौ विपदर्थे प्रमादशब्दस्य भूरिप्रयोगात् तत्र तस्य व्यवहारनिबन्धना शक्तिः स्वीक्रियत इति।

अथ कथमयं तृतीयाङ्कः कविना समुपनिबद्ध इति प्रश्नकर्त्तारः केचिदस्माभिरपि पृच्छ्यन्ते, यद्येवं पृच्छन्तो भवन्तः "किमर्थमुत्तररामचरितं रचित"मिति कथं न पृच्छन्ति? येन हि यं कमपि विषयविशेषमभिसन्दधानः 'किम्' 'कथ'मित्येतावन्मात्रमनायास-मुच्चारयन् प्रश्नकर्त्ता स्यात्। वस्तुतस्तु असाधारणचमत्कारिणी भावसौष्ठवप्रसविनी कविकल्पना न खल्वनुद्दिश्य प्रयोजनं प्रवर्त्तते; किन्त्वत्र प्रयोजनद्वयम्; तथा च कञ्चिदपि प्रचुरप्रमाणप्रमितं विश्वस्तं निर्वासनोपयोगिनमपराधमन्तरेणापि निर्वासितायाः सीताया नितान्तनिष्ठुरं निर्वासयितारं भर्त्तारं प्रति नाल्पीयानपि विरागः, प्रत्युत परमादरप्रणय-प्राचुर्य्यमिति सीतायां पतिव्रतादर्शतायाः प्रदर्शनमित्येकम्। द्वितीयन्तु प्रजारञ्जनाय निर्वासयतोऽपि रामस्य सीतां प्रति न खलु कियानप्यविश्वास आसीदिति वासन्त्यादीनां प्रतीतिः, तथा "अस्ति चेदानीमश्वमेधाय सहधर्म्मचारिणी मे हिरण्मयी सीतायाः प्रतिकृति"-रिति ब्रुवन्नार्य्यपुत्रो (रामः) मां यथार्थमेव विश्वसिति किन्तु केवलं प्रजारञ्जनायैव निर्वासितवानिति रामं प्रति सीताया विश्वासश्च भवेदिति ज्ञापनञ्चेति सुधीभिर्भाव्यम्।

(थ) तत इति। पुष्पाणाम् अवचये चयने व्यग्रौ आसक्तौ हस्तौ यस्याः सा। करुणेन शोकेन शोकस्तु सीतायाः पञ्चवटीदर्शनेन रामस्मरणादिति बोध्यम्, औत्सुक्येन उत्कण्ठया च सह तत्तथोक्ताम्। आकर्णयन्ती प्रमादशब्दमिति शेषः।

---

(ত) নেপথ্যে। প্রমাদ প্রমাদ।

(থ) তদনন্তর পুষ্পচয়নে ব্যগ্রহস্ত এবং শোক ও ঔৎসুক্যের সহিত শুনিতে শুনিতে সীতাদেবীর প্রবেশ।

सीता । अम्महे ! जाणामि पिअसही मे वासन्दी वाहरदि । (द)

पुनर्नेपथ्ये ।

सीतादेव्याः स्वकरकलितैः शल्लकीपल्लवाग्रै-
रग्रे लोलः करिकरभको यः पुरा पोषितोऽभूत् ।

सीता । किं तस्स ? । (ध)

पुनर्नेपथ्ये ।

बध्वा सार्द्धं पयसि विहरन् सोऽयमन्येन वेगा-(१)
दुद्दामेन द्विरदपतिना सन्निपत्याभियुक्तः ॥६॥

(द) अहो ! जानामि प्रियसखी मे वासन्ती व्याहरति ।

(ध) किं तस्य ? ।

---

(द) सीतेति । जानामि बुध्ये । व्याहरति भाषते । पूर्वपरिचितस्वरश्रवणादिति भावः ।

सीतेति । पुरा वनवासकाले अग्रे समीपे लोलः पल्लवग्रहणाय चञ्चलः यः करिकरभकः हस्तिशावकः सीतादेव्याः स्वकरकलितैः निजहस्तसञ्चितैः न तु अन्येन केनचिदानायितैरिति भावः । एतेन करिशावकं प्रति यत्नातिशयो व्यज्यते । शल्लकीनां लताविशेषाणां पल्लवाग्रैः तद्भक्षणैरित्यर्थः पोषितो वर्द्धितोऽभूत् । अयं दृश्यमानः स करिकरभकः बध्वा सार्द्धं स्वकीयभार्य्यया सह पयसि जले विहरन् क्रीड़न् अन्येन केनचित् उद्दामेन मदमत्तेन द्विरदपतिना हस्तियूथपेन वेगात् सन्निपत्य कुतोऽपि स्थानादागत्य अभियुक्त आक्रान्तः । सुतरां सीतादेव्याः पुत्रस्वरूपस्य करिशावकस्य विनाशसम्भावनया प्रमाद एवेति भावः ।

अत्र शल्लपल्लेति करिकरेति व्यञ्जनसङ्घस्य सकृत्साम्यात् छेकानुप्रासोऽलङ्कारः । ननु

---

(द) সীতা। ওহে! আমি বুঝিতেছি, আমার প্রিয়সখী বাসন্তী ইহা বলিতেছে।

---

(१) दर्पादिति पाठान्तरम् ।

সীতা। সসম্ভ্রমং কতিচিৎ পদানি গত্বা। অজ্জউত্ত! পরিত্তাহি পরিত্তাহি মম তং পুত্তঅং। বিচিন্ত্য (১)। হদ্ধী হদ্ধী তাইং জ্জেব চিরপরিচিতাইং অক্খরাইং পঞ্চবটীদংসণেণ মং মন্দ-ভাইণীং অণুরুন্ধন্তি। হা অজ্জউত্ত!। ইতি মূর্চ্ছতি। (ন)

(ন) আর্য্যপুত্র! পরিত্রায়স্ব পরিত্রায়স্ব মম তং পুত্রকম্। হা ধিক্ হা ধিক্ তান্যেব চিরপরিচিতানি অক্ষরাণি পঞ্চবটীদর্শনেন মাং মন্দভাগিনীমনুরুন্ধন্তি। হা আর্য্যপুত্র!।

---

"করভঃ করিশাবকঃ" ইত্যমরকোষাৎ করভশব্দেনৈব করিশাবকাভিধানাৎ পুনঃ করিশব্দো-পাদানেন অধিকপদত্বদোষ ইতি চেন্ন—

"ধনুর্জ্যাদিষু শব্দেষু শব্দাস্তু ধনুরাদয়ঃ।
আরূঢ়ত্বাদিবোধায় ন দোষঃ পুনরুক্ততা॥"

ইতি কারিকায়াং "নিরুপপদো মালাশব্দঃ পুষ্পস্রজমেবাভিধত্তে" ইতি স্থিতাবপি 'পুষ্প-মালা বিভাতি তে' অত্র পুষ্পশব্দ উৎকৃষ্টপুষ্পবুদ্ধ্যৈ" ইতি সাহিত্যদর্পণোক্তদিশা অত্রাপি করিশব্দেনোৎকৃষ্টকরিশাবকবোধনান্ন দোষঃ।

করভক ইত্যনুকম্পায়াং কঃ। মন্দাক্রান্তা বৃত্তম্ ॥৬॥

(ন) সীতেতি। সসম্ভ্রমং সত্বরম্। চিরপরিচিতানি দীর্ঘকালোচ্চারণেন অভ্যস্তানি

---

পুনরায় নেপথ্যে। পূর্ব্বে সম্মুখে থাকিয়া পল্লব গ্রহণ করিবার জন্য চঞ্চল যে হস্তিশাবকটী, সীতাদেবীর স্বহস্তসঞ্চিত শল্লকীলতার পল্লবাগ্র-দ্বারা পোষিত হইয়াছিল—

(ধ) সীতা। তাহার কি?।

পুনরায় নেপথ্যে। এই সেই হস্তিশাবক, নিজ বধূর সহিত জলে বিহার করিতেছিল, এমন সময় মদমত্ত অন্য কোন প্রকাণ্ড হস্তী, বেগে আসিয়া উহাকে আক্রমণ করিয়াছে ॥৬॥

---

(১) ধৃতিমভিনীয় সর্ব্বং লক্ষ্যমিতি পাঠভেদঃ।

प्रविश्य तमसा। वत्से! समाश्वसिहि समाश्वसिहि।

नेपथ्ये। विमानराज! अत्रैव स्थीयताम्। (प)

सीता। समाश्वस्य ससाध्वसोत्कम्पोल्लासम्। अम्महे! जलभरिद-मेहत्थणिदगम्भीरमंसला कुदो णु एसा भारदी णिग्घोस-भरन्तकण्णविवरं मंपि मन्दभाइणीं झत्ति उस्सासेदि ?। (फ)

(फ) अहो! जलभृतमेघस्तनितगम्भीरमांसला कुतो नु एषा भारती निर्घोष-म्रियमाणकर्णविवरां मामपि मन्दभागिनीं झटिति उच्छ्वासयति ?।

---

अक्षराणि 'आर्य्यपुत्र' इत्येते वर्णाः। अनुरुन्धन्ति अनुसरन्ति मम मुखात् प्रसरन्तीत्यर्थः उद्दीपकपञ्चवटीदर्शनेन स एवायं वनवासकाल इति भ्रमात् तदनुपस्थितावपि 'आर्य्यपुत्र' इत्येते वर्णाः स्वयमेव मम मुखान्निर्गच्छन्तीति भावः।

(प) नेपथ्य इति। विमानराज इति पुष्पकविमानस्य सम्बोधनम्। रामोक्तिरियम्।

(फ) सीतेति। साध्वसेन भयेन उत्कम्पः शरीरचाञ्चल्यम्, उल्लासः हर्षोच्छ्वासः ताभ्यां सहेति तथोक्तम्। स्वरश्रवणेन रामोऽयं न वेति संशये स चेत्तदागत्य पुनरपि किं कुर्य्यादिति भयेनोत्कम्पः, असाधारणपतिव्रतायाः पतिदर्शने च उच्छ्वास इति बोध्यम्। जलेन भृतस्य परिपूर्णस्य मेघस्य स्तनितमिव गर्जितमिव गम्भीरा मन्द्रा, मांसला बलवती बलवता जनेनोच्चारितेव प्रतीयमानेत्यर्थः एषा भारती वाणी कुतो जनादुत्पन्ना सतीत्यर्थः निर्घोषेण शब्देन म्रियमाणे कर्णविवरे यस्यास्तां तथोक्ताम्। झटिति द्रुतम्। उच्छ्वासयति सञ्जीवयति। मृतप्रायां माम् आनन्देन उत्फुल्लयतीत्यर्थः।

---

(ন) সীতা। (ব্যস্ততার সহিত কতিপয় পদ গমন করিয়া) আর্য্যপুত্র! আমার সেই পুত্রটীকে রক্ষা করুন রক্ষা করুন। (চিন্তা করিয়া) হায়! হায়! পঞ্চবটী দর্শন করায়, চির অভ্যস্ত সেই অক্ষরগুলিই মন্দভাগিনী আমার অনুসন্ধান করিতেছে (আমার মুখ হইতে নির্গত হইতেছে)। হা আর্য্যপুত্র! (এই বলিয়া মূর্চ্ছিত হইলেন।)

তমসা। (প্রবেশ করিয়া) বৎসে! আশ্বস্ত হও আশ্বস্ত হও।

(প) নেপথ্যে। বিমানরাজ! এইখানেই থাক।

তমসা। সস্মিতাস্রম্। অয়ি বৎসে! (ব)

কিমব্যক্তোঽসি নিনদে (১) কুতস্ত্যেঽপি ত্বমীদৃশী (২)।
স্তনয়িত্নোর্ময়ূরীব চকিতোৎকণ্ঠিতা (৩) স্থিতা? ॥৩॥

(ব) তমসেতি। চিরানুভূতেঽপি স্বরে সংশয় ইতি বিস্ময়েন স্মিতম্, আগতেঽপি রামে পরস্পরসাক্ষাৎকারো ন ভবেদিতি দুঃখেন চাস্রং তাভ্যাং সহেতি সস্মিতাস্রম্।

কিমিতি। স্তনয়িত্নোর্মেঘস্য অব্যক্তে কুতস্ত্যেঽপি নিনদে গর্জিতে সতি ময়ূরীব ত্বম্ অব্যক্তে অপরিস্ফুটে কস্যায়মিত্যস্পষ্টে ইত্যর্থঃ কুতস্ত্যে কস্মাদবিদিতদেশাদাগতে কস্মাদ্দেশাদয় শব্দ আগত ইতি দেশবিশেষজ্ঞানে সত্যপি তত্র গত্বা জননিরূপণসম্ভাবনা স্যাদেব তু সাপি ন স্যাদিতি ভাবঃ, নিনদে "বিমানরাজ! অত্রৈব স্থীয়তা"মিতিমাত্রে শব্দে সতি কিং কস্মাৎ চকিতা চঞ্চলা উৎকণ্ঠিতা উৎসুকা চ সতী স্থিতাসি।

অত্র প্রকৃষ্টকারণাভাবেঽপি চকিতত্বোৎকণ্ঠিতত্বরূপকার্য্যোৎপত্তের্বিভাবনালঙ্কারঃ পূর্ণোপময়া সঙ্কীর্য্যতে। তথা ময়ূরী অস্তি, ত্বন্তু অসি ইতি প্রথমমধ্যমপুরুষভেদাৎ "লতেব রাজসে তন্বী"তি সাহিত্যদর্পণোদাহৃতবৎ উপমাগতভগ্নপ্রক্রমত্বদোষঃ, স চ "নিনদে কথমব্যক্তে" ইতি পাঠেন সমাধেয়ঃ।

"অভ্রং মেঘো বারিবাহঃ স্তনয়িত্নুর্বলাহকঃ" ইত্যমরঃ।

কুতো ভবতীতি কুতস্ত্যঃ "অব্যয়াত্ত্যপ্" ইতি ত্যপ্রত্যয়ঃ। পথ্যাবক্ত্রং বৃত্তম্ ॥৩॥

---

(ফ) সীতা। (আশ্বস্ত হইয়া ভয়, কম্প ও উল্লাসের সহিত) ওহে! জলপূর্ণ মেঘের গর্জ্জনের ন্যায় গম্ভীর ও দীর্ঘ এই বাক্য, কোথা হইতে উৎপন্ন হইয়া, স্বরদ্বারা আমার কর্ণবিবর পরিপূর্ণ করিয়া, মন্দভাগিনী আমাকেও হঠাৎ উৎফুল্ল করিল?।

(ব) তমসা। (ঈষৎ হাস্য ও অশ্রুপাতের সহিত) অয়ি বৎসে! 'কাহার শব্দ' তাহার নিশ্চয় নাই এবং কোথা হইতে আসিতেছে

---

(১) অপরিস্ফুটনিক্বাণে ইতি পাঠভেদঃ। (২) কুতস্ত্যে প্রীতিরীদৃশীতি পাঠান্তরম্।
(৩) চকিতোৎকণ্ঠিতমিতি ক্বাপি পাঠঃ।

सीता। भअवदि! किं भणासि अपरिप्फुडत्ति। मए उण सरसंजोएण पच्चभिजाणिदं, अज्जउत्तो ज्जेव वाहरदि। (भ)

तमसा। श्रूयते, तपस्यतः किल शूद्रस्य दण्डधारणार्थमैक्ष्वाको राजा जनस्थानमागत इति। (म)

सीता। दिट्ठिआ अपरिहीणराअधम्मो क्खु सो राआ। (य)

---

(भ) भगवति! किं भणसि अपरिस्फुटेति। मया पुनः स्वरसंयोगेन प्रत्यभिज्ञातम्, आर्य्यपुत्र एव व्याहरति।

(य) दिष्ट्या अपरिहीनराजधर्म्मः खलु स राजा।

---

(भ) सीतेति। भगवति! तमसे!। अव्यक्त इति तमसोक्तवाक्यस्य अर्थमादाय सीतायाः प्रश्नः अपरिस्फुट इति। स्वरसंयोगेन कर्णे स्वरसम्बन्धेन प्रत्यभिज्ञातम् अनुभूतस्य पुनरनुभवः कृतः "अनुभूतस्य पुनरनुभवः प्रत्यभिज्ञे"ति नैयायिकाः। व्याहरति भाषते।

(म) तमसेति। शूद्रस्य शम्बूकस्य, दण्डधारणार्थं दण्डकरणार्थम् ऐक्ष्वाक इक्ष्वाकु-वंशोत्पन्नः, राजा रामः। इति शब्दस्य श्रूयत इत्यनेनान्वयः।

(य) सीतेति। स राजा रामः, दिष्ट्या भाग्येन न परिहीनः परित्यक्तः राजधर्म्मः राजकर्त्तव्यं येन सः।

---

তাহারও স্থিরতা নাই; তথাপি মেঘের শব্দে ময়ূরীর ন্যায় তুমি কেন এ রকম চকিত ও উৎকণ্ঠিত হইয়া রহিয়াছ ॥৭॥

(ভ) সীতা। ভগবতি! আপনি কেন বলিতেছেন যে, 'অব্যক্ত শব্দ' (কাহার শব্দ, তাহার নিশ্চয় নাই)। আমি কিন্তু স্বরসংযোগে বুঝিতেছি যে, আর্য্যপুত্রই বলিতেছেন।

(ম) তমসা। শুনিয়াছি বটে, তপস্যাকারী শূদ্রের দণ্ডবিধানের নিমিত্ত ইক্ষ্বাকুবংশীয় রাজা রামচন্দ্র জনস্থানে আসিয়াছেন।

(য) সীতা। ভাগ্যবশতঃ সেই রাজা, রাজধর্ম্ম পরিত্যাগ করেন নাই।

नेपथ्ये। यत्र द्रुमा अपि मृगा अपि बन्धवो मे
यानि प्रियासहचरश्चिरमध्यवात्सम्।
एतानि तानि बहुनिर्झरकन्दराणि
गोदावरीपरिसरस्य गिरेस्तटानि ॥८॥

सीता। दृष्ट्वा। हा कधं पहादचन्दमण्डलावण्डरपरिक्खाम-दुव्वलेण आआरेण अअं (१) सोम्मगम्भीराणुभावमेत्तपच्चभि-आणिदो अज्जउत्तो ज्जेव, ता मं धारेहि (२)। इति तमसामाश्लिष्य मूर्च्छति। (र)

यत्रेति। यत्र येषु तटेषु द्रुमा अपि वृक्षा अपि, मृगा अपि पशवोऽपि मे मम बन्धवः आसन्निति शेषः। छायादानशरीरकण्डूयनादिना समुपकारित्वादिति भावः। प्रिया-सहचरः सीतया सहितः, चिरं बहुकालं यानि तटानि अध्यवात्सम् आश्रित्य वासं कृतवान्, एतानि दृश्यमानानि बहवो निर्झरा जलप्रवाहाः कन्दरा गुहाश्च येषु तानि तथोक्तानि, गोदावर्य्या नद्याः परिसरः पर्य्यन्तस्थितेः सीमावर्त्तीति यावत् तस्य गिरेः पर्वतस्य तानि तटानि समीपभूमयो वर्त्तन्त इत्यर्थः।

अत्र मुनि-तत्पत्नीकुमारादिषु का कथा, द्रुमा अपि मृगा अपि मम बन्धव आसन्नित्यर्था-पतनादर्थापत्तिरलङ्कारः।

"पशवोऽपि मृगाः।" "पर्य्यन्तभूः परिसरः" इति चामरः।

यानीति "अन्वध्याङ्गो वस" इत्यधिकरणस्य कर्म्मत्वम्। वसन्ततिलका वृत्तम् ॥८॥

নেপথ্যে। যে স্থানের বৃক্ষসমূহও এবং পশুগণও আমার বন্ধু ছিল, যে স্থানগুলিতে প্রিয়তমা সীতার সহিত আমি, দীর্ঘকাল বাস করিয়াছিলাম এবং যেখানে বহুতর জলপ্রবাহ ও গুহা ছিল, এই সেই সকল গোদাবরীর প্রান্তবর্ত্তী পর্ব্বতের সন্নিহিত স্থান ॥৮॥

(१) अयं सो गम्भीराणुभावः इति पाठान्तरम्। अयं णिअसोम्मगम्भीराणुभावः इत्यपि पाठः। (२) ता धारेदु मं पिअसही इति पाठभेदः।

तमसा। धारयन्ती। वत्से! समाश्वसिहि समाश्वसिहि।

नेपथ्ये। अनेन पञ्चवटीदर्शनेन—

अन्तर्लीनस्य दुःखाग्नेरद्योद्दामं ज्वलिष्यतः।
उत्पीड़ इव धूमस्य मोहः प्रागावृणोति माम् ॥८॥

---

(र) हा कथं प्रभातचन्द्रमण्डलापाण्डुरपरिक्षामदुर्बलेन आकारेण अयं सौम्य-गम्भीरानुभावमात्रप्रत्यभिज्ञात आर्य्यपुत्र एव, तन्मां धारय।

---

(र) सीतेति। 'हा कथमित्येकमव्ययं महाविषादसूचकम्।' प्रभातचन्द्रमण्डलवत् आपाण्डुरः श्वेतच्छायः, दुर्बलो बलहीन इव परिलक्ष्यमाणस्तेन आकारेण आकृत्या उपलक्षित इत्यर्थः। अयं दृश्यमानो जनः सौम्यं शान्तं गम्भीरं स्थिरं यदनुभावमात्रं केवलप्रभावस्तेन प्रत्यभिज्ञातः पुनरनुभूत आर्य्यपुत्रो राम एव आकृतिवैषम्यात् सोऽयं न वेति संशय एव स्यात् किन्तु पूर्वानुभूतप्रभावदर्शनात् सोऽयमिति निश्चय इति भावः। तत्तस्मात् रामस्यैतादृक् कष्टकरावस्थादर्शनेन मूर्च्छया पतनेन आघातसम्भवादित्यर्थः। धारय अवलम्बस्व। आयुर्वेदोक्तात् नूतनोऽयं मूर्च्छाप्रकारः, यत् पतनात् प्राक् रोगी धारयितु-मुपदिशतीत्यद्भुतम्।

"अनुभावः प्रभावेऽपी"त्यमरः।

अन्तरिति। अन्तः अन्तःकरणे लीनस्य कालेनापचयात् अल्पमात्रावशेषेण गुप्तभावेन स्थितस्य, अद्य अनेन पञ्चवटीदर्शनेन उद्दामम् अत्यन्तं ज्वलिष्यतः सन्दीपिष्यमाणस्य बाहुल्यं

---

(র) সীতা। (দেখিয়া) হায়! দেহখানি, প্রভাতকালের চন্দ্রমণ্ডলের ন্যায় শ্বেতবর্ণ, অত্যন্ত ক্ষীণ এবং দুর্ব্বল হইয়া গিয়াছে; তথাপি সৌম্য ও গম্ভীর প্রভাবমাত্রে পরিচয় পাওয়া যাইতেছে; এই অবস্থায় আর্য্যপুত্রই ইনি! তা, আমাকে ধারণ করুন। (এই বলিয়া তমসাকে আলিঙ্গন করিয়া মূর্চ্ছিত হইলেন।)

তমসা। (ধারণ করতঃ) বৎসে! আশ্বস্ত হও আশ্বস্ত হও।

নেপথ্যে। এই পঞ্চবটী দর্শনে—

হা প্রিয়ে! জানকি!। (ল)

তমসা। স্বগতম্। ইদং তদাশঙ্কিতং গুরুজনেনাপি। (ব)

সীতা। সমাশ্বস্য। হা কধং এদং। (শ)

পুনর্নেপথ্যে। হা দেবি! দণ্ডকারণ্যবাসপ্রিয়সখি! বিদেহ-রাজপুত্রি!। ইতি মূর্চ্ছতি। (ষ)

---

(শ) হা কথমেতত্।

---

প্রাপ্নোত ইত্যর্থঃ উদ্বোধকপ্রাপ্ত্যা উদ্বোধনীয়স্য বাহুল্যাবশ্যম্ভাবাদিতি ভাবঃ। দুঃখমগ্নিরিব তস্য, ধূমস্য উত্পীড়ো রাশিরিব মোহঃ মাং প্রাক্ সম্পূর্ণবিকাশাত্ পূর্বম্ আবৃণোতি আচ্ছাদয়তি। যথা বহ্নিজনিতো ধূমো বহ্নেঃ পূর্ণবিকাশাত্ পূর্বং তত্ স্থানমাচ্ছাদয়তি, তথা দুঃখজনিতো মোহঃ দুঃখস্য পূর্ণবিকাশাত্ পূর্বং মামাবৃণোতীতি সরলার্থঃ।

অত্র পূর্বার্দ্ধে লুপ্তোপমা, পরার্দ্ধে চ সাধারণোপমা ইত্যুভয়োঃ অঙ্গাঙ্গিভাবেন সঙ্করঃ। ন চ জ্বলিষ্যত ইতি সাধকসত্ত্বাত্ দুঃখাগ্নেরিতি নিরঙ্গং কেবলং রূপকমিতি বাচ্যং ধূমস্যোত্পীড় ইব মোহ ইত্যুপমানুসারেণ দুঃখাগ্নেরিত্যুপমায়া এবৌচিত্যাদিতি সুধীভি-র্বিভাবনীয়ম্ ॥৯॥

(ল) হেতি। কুত্রাসীতি বাক্যশেষঃ।

(ব) তমসেতি। গুরুজনেন অগস্ত্যলোপামুদ্রাগঙ্গাদিনেত্যর্থঃ। আশঙ্কিতং তদিদং রামস্য মূর্চ্ছাপতনাদিকম্, উপস্থিতমিতি শেষঃ।

---

অন্তরে লীন দুঃখানল, আজ অত্যন্ত প্রজ্বলিত হইবে; তাহার ধূমরাশির ন্যায় মোহ, পূর্ব্বেই আমাকে আবৃত করিতেছে ॥৯॥

(ল) হা প্রিয়ে! জনকনন্দিনি!।

(ব) তমসা। (স্বগত) এই সেই গুরুজনেরও আশঙ্কিত বিষয় উপস্থিত হইয়াছে।

(শ) সীতা। (আশ্বস্ত হইয়া) হায়! এরূপ কেন হইল।

सीता। हद्धी हद्धी, मं मन्दभाइणिं उद्दिसिअ आमीलन्तणेत्त-णीलुप्पलो मुच्छिदो ज्जेव, हा हा कधं धरणीवट्टे णिरुस्साहं णिसहं विपल्हत्थो ; भअवदि! तमसे! परित्ताहि परित्ताहि जीवावेहि अज्जउत्तं। इति पादयोः पतति। (स)

(स) हा धिक् हा धिक्, मां मन्दभागिनीमुद्दिश्य आमीलन्नेत्रनीलोत्पलो मूर्च्छित एव, हा हा कथं धरणीपृष्ठे निरुत्साहनिःसहं विपर्य्यस्तः ; भगवति! तमसे! परित्रायस्व परित्रायस्व जीवय आर्य्यपुत्रम्।

---

(ष) पुनरिति। दण्डकारण्यवासे तत्समय इत्यर्थः, प्रियसखि! सहायभावेन नानोपकारकरणादिति भावः।

(स) सीतेति। आमीलती मुद्रिते नेत्रे नीलोत्पले इव यस्य स तथोक्तः। निरुत्-साहेन कमपि विषयं प्रति उद्यमाभावेन निःसहम् अवशं यथा स्यात्तथा धरणीपृष्ठे भूतले विपर्य्यस्तः पतितः। परित्रायस्व मामिति शेषः। जीवय सचेतन्यं कुरु। आर्य्यपुत्र-जीवनेनैव मम परित्राणं भवेदिति भावः।

"उत्साहोऽध्यवसायः स्या"दित्यमरः।

निर्मक्षिकमित्यादिवत् निरुत्साहमिति अभावार्थेऽव्ययीभावः।

---

(ষ) পুনরায় নেপথ্যে। হা দেবি! দণ্ডকারণ্যবাসকালীন-প্রিয়সখি! বিদেহরাজতনয়ে!। (এই বলিয়া মূৰ্চ্ছিত হইলেন।)

(স) সীতা। হায়! হায়! মন্দভাগ্যা আমাকে উদ্দেশ্য করিয়া, নয়ননীলোৎপলযুগল মুদ্রিতকরতঃ মূৰ্চ্ছিতই হইলেন!। হায়! হায়! ভূমির উপরে নিরুদ্যম ও অবশভাবে পতিত হইলেন। ভগবতি! তমসে! রক্ষা করুন, রক্ষা করুন ; আর্য্যপুত্রকে জীবিত করুন। (এই বলিয়া তমসার চরণযুগলের উপর পতিত হইলেন।)

तमसा। त्वमेव ननु कल्याणि! सञ्जीवय जगत्पतिम्।
प्रियस्पर्शो हि पाणिस्ते तत्रैव नियता भव (१) ॥१०॥

सीता। जं भोदु तं भोदु, जधा भअवदी भणादि।

इति ससम्भ्रमं निष्क्रान्ता। (ङ)

ततः प्रविशति भूमौ निपतितः सास्रया सीतया स्पृश्यमानः साह्लादोच्छ्वासो रामभद्रः। (च)

(ङ) यद्भवतु तद्भवतु, यथा भगवती भणति।

---

त्वमिति। ननु कल्याणि! हे शुभे! त्वमेव जगत्पतिं पृथिवीपालं रामं सञ्जीवय ससंज्ञं कुरु। तवैव करणीयमेतत् न त्वन्यस्य इत्येवशब्दार्थः। हि यस्मात्, ते तव पाणिः करतलम्, प्रियः प्रीतिकरः स्पर्शो यस्य सः। सुतरां रामस्य चैतन्यसम्पादनं तव यथा सुकरं नान्यस्य तथेति भावः। अतएव तत्रैव पाणिना स्पर्श एव नियता व्यापृता भव।

अत्र चतुर्थपादार्थं प्रति तृतीयपादगतवाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्ग-मलङ्कारः ॥१०॥

(ङ) सीतेति। यद्भवतु तद्भवतु, अनुमत्यभावेऽपि हस्तस्पर्शकरणे क्रुद्धः सन्तुष्टो वा भवतु इत्यर्थः। ईदृशसमये तन्न विवेचनीयमिति भावः। यथा भगवती तमसा भणति ब्रवीति, तथा करोमि पाणिना स्पृशामीत्यर्थः। ससम्भ्रमं सत्वरम्।

(च) तत इति। सास्रया रामस्य मूर्च्छितावस्थादर्शनेन सबदश्रुसहितया। आह्लादेन हर्षेण, उच्छ्वासेन चैतन्येन च सहेति साह्लादोच्छ्वासः।

---

তমসা। হে শুভে! তুমিই ভূপতিকে জীবিত কর; তোমার হস্তস্পর্শই উঁহার প্রীতিকর হইবে; সুতরাং তাহাতেই ব্যাপৃতা হও ॥১০॥

(ঙ) সীতা। যা হউক, তা হউক; আপনি যাহা বলিলেন (তাহাই করি)। (এই বলিয়া, তাড়াতাড়ি চলিয়া গেলেন।)

(ক্ষ) তদনন্তর সাশ্রুনয়না সীতা হস্তামর্শন করিতেছেন এই অবস্থায় আনন্দ ও চৈতন্যলাভের সহিত ভূপতিতভাবে রামচন্দ্রের প্রবেশ।

---

(१) नियतो भवः, तत्रैव निरतो जनः। इति पाठान्तरद्वयम्।

सीता। किञ्चित् सहर्षमात्मगतम्। जाणामि, पुणो वि पच्चागदं विअ जोविदं तिल्लोअणाहस्स (१)। (क)

रामः। हन्त भोः! किमेतत्!। (ख)

प्रश्च्योतनं नु हरिचन्दनपल्लवानां
निष्पीड़ितेन्दुकरकन्दलजो नु सेकः।
आतप्तजीवनमनःपरितर्पणो मे (२)
सञ्जीवनौषधिरसो नु हृदि प्रसिक्तः ॥११॥

(क) जानामि, पुनरपि प्रत्यागतमिव जीवितं त्रिलोकनाथस्य।

(क) सीतेति। त्रिलोकनाथस्य जगदीश्वरस्य रामस्य जीवितं चैतन्यं पुनरपि प्रत्यागतमिव इत्यहं जानामि बुध्ये, श्वासप्रश्वासादिदर्शनादिति भावः। लक्ष्मीरूपा सीता नारायणावतारत्वेन रामस्य जगदीश्वरत्वं जानात्येव, तस्य तु आत्मगतत्वेन कथने अन्यैरज्ञेयत्वात् न मानुषवद्व्यवहारहानिः। ननु कथमनयोर्मानुषवद्व्यवहार इति सत्यं जगति स्त्रीपुरुषाणां चरित्रशिक्षादानाय जगदीश्वरीजगदीश्वरयोः सीतारामयोर्मानुषभावेन व्यवहारः सजातीयशिक्षायाः शीघ्रफलकत्वात्। इदन्तु कविना अध्यात्मरामायणावलम्बनेनोक्तम्। वाल्मीकिमते तु राम आदर्शचरितो मानव एवेत्यनुसन्धेयम्।

(ख) राम इति। हन्तभोरिति हर्षविस्मयसूचकमेकमव्ययम्। किमेतदित्यस्य श्लोकेनान्वयः।

प्रश्च्योतनमिति। एतत् स्पर्शनं किं हरिचन्दनपल्लवानां चन्दनवृक्षविशेषकिसलयानां प्रश्च्योतनं रसो निर्यास इति यावत् नु वितर्कयामीत्यर्थः तद्वत् शैत्यातिशयकरत्वादिति

(क) সীতা। (কিঞ্চিৎ আনন্দের সহিত স্বগত) বুঝিতেছি, ত্রিলোকনাথের জীবন যেন পুনরায় আসিয়াছে।

(খ) রাম। হায় হে! এ কি!।

(१) तिल्लोकस्स इति पाठान्तरम्।

(२) आतप्तजीवितत रोः, जीवितपुनःपरितर्पणोऽयं इति पाठभेदौ।

स्पर्शः पुरा परिचितो नियतं स एष
सञ्जीवनश्च मनसः परिमोहनश्च।
सन्तापजां सपदि यः प्रतिहत्य मूर्च्छा-
मानन्दनेन जड़तां पुनरातनोति ॥१२॥

भावः। सर्वत्राप्येवं नुशब्दो वितर्के। पल्लवपदं शैत्यातिशयद्योतनार्थम्। निष्पीड़िताः मर्द्दिता इन्दुकरकन्दलाः चन्द्रकिरणनवाङ्कुरा यस्मै स तथोक्तो मर्द्दितचन्द्रकराङ्कुरादुत्पन्नो रस इत्यर्थः तस्मात् जायत इति इन्दुकरकन्दलजः आमर्द्दितचन्द्रकराङ्कुरनिर्यासजनित इत्यर्थः सेको नु, तथा आतप्तयोः नितान्तसन्तप्तयोर्जीवनमनसोः प्राणचित्तयोः परितर्पणः शीतलकारित्वात् प्रीतिकरः, सञ्जीवयतीति सञ्जीवनी या ओषधिः फलपाकेन मृतत्वादिः तस्या रसो निर्यासो मे मम हृदि प्रसिक्तो नु। एतेषामन्यतमाभावे कथमकस्मान्मम चैतन्योत्पत्तिरिति भावः।

अत्र स्पर्शे प्रशीतनादीनां संशयात् तत्र च निश्चयाभावात् शुद्धसन्देहालङ्कारः। परश्लोके "स्पर्शः पुरा परिचितो नियतं स एष" इत्युक्त्या तत्स्पर्शस्याप्यनुभवादुभयकोटिकज्ञानरूपः संशयो रामस्य जात इत्यनुसन्धेयम्। इन्दुकरकन्दलनिष्पीड़नासम्बन्धेऽपि तत्सम्बन्धोक्त्या अतिशयोक्तिश्च अनयोरङ्गाङ्गिभावेन सङ्करः।

"तैलपर्णिक-गोशीर्षे हरिचन्दनमस्त्रियाम्।" "ओषध्यः फलपाकान्ता" इति चामरः।

वसन्ततिलका वृत्तम् ॥११॥

स्पर्श इति। पुरा सीतया सहैकत्रावस्थानकाले परिचितः ईदृक्तया विदितः सञ्जीवन उत्साहवर्द्धक इत्यर्थः मनसो हृदयस्य परिमोहनः आनन्दबाहुल्येन अवशताजनकश्च नियतं निश्चितम् एष अनुभूयमानः स स्पर्शः। यः स्पर्शः सन्तापजां वियोगवेदनाजनितां मूर्च्छां प्रतिहत्य विनाश्य सपदि तत्क्षणात् आनन्दनेन आनन्दजननेन पुनः जड़तां मनसस्तदेकानुभवपरायणत्वात् विषयान्तरानभिज्ञताम् आतनोति करोति।

ইহা কি চন্দনপল্লবের নির্যাস? না চন্দ্রকিরণের ক্ষুদ্রাংশজাত সেক? কিংবা সন্তপ্ত জীবন ও মনের তৃপ্তিজনক সঞ্জীবনৌষধির রস আমার হৃদয়ে, কেহ সিক্ত করিল? ॥১১॥

सीता । ससाध्वसोत्कम्पमपसृत्य (१) । एत्तिअं ज्जेव दाणिं मे वहुदरं । (ग)

रामः । उपविश्य । न खलु वत्सलया सीतादेव्या अभ्युपपन्नोऽस्मि ? । (घ)

---

(ग) एतावदेव इदानीं मे बहुतरम् ।

---

अत्र जड़ताकरणासम्बन्धेऽपि तत्सम्बन्धोक्त्या अतिशयोक्तिरलङ्कारः । यच्छन्दस्य परत्र पाठेन विधेयाविमर्शदोषः, स च परार्द्धं प्रथमं ततस्तृतीयपादं पठित्वा निरसनीयः ।

"सद्यः सपदि तत्क्षणात् ।" "जड़ोऽज्ञः" इति चामरः ।

वसन्ततिलका वृत्तम् ॥१२॥

(ग) सीतेति । साध्वसम् अनुमत्यभावेऽपि समीपागमनेन रामस्य क्रोधभयम्, उत्कम्पः स्पर्शेन सत्त्वोद्रेकात् देहचाञ्चल्यं ताभ्यां सहेति तत् तथोक्तम् । इदानीं निर्वासनकाले एतावदेव मम स्पर्शस्य सुखजनकत्वस्वीकारपर्य्यन्तमेव बहुतरम् अतिरिक्तम् अत्यन्तादरत्वेन मन्तव्यमित्यर्थः प्रेमालापसहवासादिप्रकृतसुखानामेकान्तासम्भवादिति भावः ।

(घ) राम इति । वत्सलया स्नेहशालिन्या । अभ्युपपन्नः प्राप्तः स्पृष्ट इति यावत् । अत्र काकुस्वरेण प्रश्नो द्योत्यते, तया च न खलु अभ्युपपन्नोऽस्मि किम्, अपि तु अभ्युपपन्न एव, कथमन्यथा तादृगलौकिकसुखस्पर्श इति भावः ।

---

জীবনীশক্তিবর্দ্ধক, মনের মোহজনক এবং পূর্ব্বপরিচিত, নিশ্চয়ই এই সেই স্পর্শ ; যে স্পর্শ, সন্তাপজাত মূর্চ্ছা নষ্ট করিয়া, আনন্দ উৎপাদন-দ্বারা পুনরায় জড়তা জন্মাইতেছে ॥১২॥

(গ) সীতা। ( ভয় ও কম্পের সহিত সরিয়া ) এখন এই পর্য্যন্তই আমার পক্ষে বহুতর ।

(ঘ) রাম। ( বসিয়া ) স্নেহশালিনী সীতাদেবী আমাকে স্পর্শ করেন নাই কি ? ।

---

(१) ससाध्वसकम्पमिति पाठान्तरम् । भयशोकसहितमिति तदर्थः ।

सीता। हद्दी हद्दी, किं त्ति मं अज्जउत्तो मग्गिस्सदि ?। (ङ)

रामः। भवतु, पश्यामि। (च)

सीता। भअवदि! तमसे! ओसरह्म, जइ दाव मं पेक्खिस्सदि, तदो अणव्भणुस्सादसण्णिधाणेण अहिअं पि मम महाराओ कुविस्सदि। (छ)

(ङ) हा धिक् हा धिक्, किमिति माम् आर्य्यपुत्रो मार्गिष्यति ?।

(छ) भगवति! तमसे! अपसरामः, यदि तावन्मां प्रेक्षिष्यते, तदा अनभ्यनुज्ञातसन्निधानेन अधिकमपि मम महाराजः कोपिष्यति।

---

१ (ङ) सीतेति। हा धिगित्येक शोकसूचकमव्ययं तस्य दैन्ये द्विर्वचनम्। यस्याहमनुक्षणमेव सहचारिणी आसम्, स समिदानीमन्वेषणाय प्रवृत्त इति महाशोककारणमेतदिति भावः। मार्गिष्यति अन्वेषणं करिष्यति। रामस्य मुखभङ्गिशरीरचाञ्चल्यादिदर्शनात् सीताया अयं संशयः।

(च) राम इति। भवतु, सीताया अभ्युपपत्तिरनभ्युपपत्तिर्वा भवतु इत्यर्थः। पश्यामि समन्तादवलोकनेन तन्निरूपयामीत्यर्थः। पश्यामीत्यतः परं 'इति समन्तादवलोकयति' ईदृशं किञ्चित् कविवाक्यं मन्तव्यम् अन्यथा पूर्वपरवर्त्तिसीतावाक्याभ्यां सहासामञ्जस्यं स्यादिति विवेच्यम्।

(छ) सीतेति। अपसरामः अस्मात् स्थानादन्यत्र गच्छामः वयमिति शेषः, "वास्मदश्च"ेति बहुवचनम्। अनभ्यनुज्ञातम् अननुमतं समीपमागच्छेत्यनुमत्यभावविशिष्टमिति यावत् यत् सन्निधानं निकटवर्त्तित्वं तेन। मां प्रति नितान्तावज्ञां विना निर्वासनं न स्यात् सुतराम् अवज्ञया निर्वासिताया मम आर्य्यपुत्रानुमतिमन्तरेण समीपगमनं कोपकारणमेवेति भावः।

---

(ঙ) সীতা। হায়! হায়! আর্য্যপুত্র কি আমাকে অন্বেষণ করিবেন ?।

(চ) রাম। হউক; দেখি।

तमसा। अयि वत्से! भागीरथीवरप्रभावाद्वनदेवताना-मप्यदृश्या संवृत्तासि। (ज)

सीता। आं, अत्थि एदं। (झ)

रामः। हा प्रिये! जानकि! ननु प्रिये जानकि!। (ञ)

सीता। समन्युगद्गदम्। अज्जउत्त! असरिसं क्खु एदं वअणं इमस्स वुत्तन्तस्स। सास्रम्। अहवा किं त्ति वज्जमइं जम्मन्तरेसु वि पुणो असम्भाविददुल्लहदंसणं मं ज्जेव मन्द-भाइणीं उद्दिसिअ वच्छलस्स एवं वादिणो अज्जउत्तस्स उवरि

(झ) आं, अस्ति इदम्।

(ज) तमसेति। भागीरथीवरप्रभावात् गङ्गाया वरमाहात्म्यात्। वनदेवतानामपि अदृश्या त्वमसि, किं पुनर्मानुषस्य रामस्येति वाक्यशेषः; सुतरां तव अपसरणप्रयोजनं नास्तीति भावः।

(झ) सीतेति। आमिति पूर्ववृत्तस्मरणार्थमव्ययम्। इदं भागीरथीवरप्रभावान्मम अदृश्यत्वम् अस्तीति स्वीकारः; अतो नापसरामीति भावः।

(ञ) राम इति। अनुनयविशेषद्योतनार्थं पुनर्ननु प्रिये जानकीत्युक्तम्। "प्रश्नावधारणाऽनुज्ञाऽनुनयामन्त्रणे ननु" इत्यमरः।

(ছ) সীতা। ভগবতি! তমসে! আমি সরিয়া যাই। যদি আমাকে দেখেন, তবে বিনা অনুমতিতে নিকটে যাওয়ায় মহারাজ আমার উপরে অধিক ক্রুদ্ধ হইবেন।

(জ) তমসা। অয়ি বৎসে! গঙ্গার বরের প্রভাবে, তুমি বনদেবতা-দিগেরও অদৃশ্যা হইয়াছ।

(ঝ) সীতা। হাঁ; ইহা আছে বটে।

(ঞ) রাম। হা প্রিয়ে! জানকি! অয়ি প্রিয়ে! জানকি!।

णिरणुक्कोसा भविस्सं ? अहं एदस्स हिअअं आणामि मम एसो त्ति। (ट)

(ट) आर्य्यपुत्र ! असदृशं खलु एतत् वचनम् अस्य वृत्तान्तस्य। अथवा किमिति वज्रमयीं जन्मान्तरेषु अपि पुनः असम्भावितदुर्लभदर्शनां मामिव मन्दभागिनीम् उद्दिश्य वत्सलस्य एवंवादिन आर्य्यपुत्रस्य उपरि निरनुक्रोशा भविष्यामि ? अहमेतस्य हृदयं जानामि मम एष इति।

---

(ट) सीतेति। मन्युना शोकेन गद्गदः अस्फुटः, अस्पष्टरूपेणोच्चारणं तेन सहेति समन्युगद्गदम् आहेति क्रियाविशेषणमेतत्। इदं वचनं 'प्रिये जानकी'ति स्नेहव्यञ्जकप्रीतिकरं वचनम् अस्य वृत्तान्तस्य अकारणनिर्वासनरूपनिर्दयव्यवहारस्येत्यर्थः असदृशम् अयोग्यम् ; निर्वासितां प्रति 'रे पापीयसि' इति निन्दासूचकसम्बोधनमेव युज्यते, न तु प्रिये इति सम्बोधनं व्यवहारानुरूपोक्तेरेव महात्मनां धर्मत्वात्, अन्यथा "वचस्यन्यन्मनस्यन्यत् कर्मण्यन्यद्दुरात्मना"मिति न्यायेन दुरात्मतापत्तेरिति भावः। प्रजाविरागसम्भावनयैव मम निर्वासनं कृतं न तु चरित्रदोषाशङ्कयेति कथमन्यथा इदानीमीदृग्व्यवहार इति विवेकोदयात् पक्षान्तरमाह अथवेति। वज्रमयीं नितान्तकठिनां कथमन्यथा आर्य्यपुत्रस्येदृगवस्थादर्शनेनापि मे न हृदयं विदीर्य्येत इति भावः। जन्मान्तरेष्वपि पुनः असम्भावितम् अनिश्चितं दुर्लभञ्च दर्शनं यस्याः ताम्, अस्मिन् जन्मनि निर्वासनेन गङ्गाया वरप्रभावेन च मम अदर्शनं जातं जन्मान्तरेष्वपि दर्शनं भवेदिति को निश्चित्य वक्तुं शक्नुयादिति भावः। वत्सलस्य मां प्रति स्नेहशालिनः। एवंवादिनः, हा प्रिये इत्यादि स्नेहोक्तिकारिणः। निरनुक्रोशा निर्दया किमिति भविष्यामि कथमपि नेत्यर्थः। एतस्य आर्य्यपुत्रस्य हृदयं मनोगतं भावमित्यर्थः। एष आर्य्यपुत्रः मम हृदयं जानातीत्यर्थः। आवामुभावेव उभयोर्मनोभावं जानीवः, सुतराम् आवयोः कोऽपि कमपि प्रति विद्वेषो न भवेदिति निश्चय एवास्ति, तथापि यदनेन दुर्व्यवहारः कृतः, तत्तु दैववशादिति भावः। भागीरथीवरप्रभावात् यथा कश्चिदपि सीताया दर्शनं न प्राप्तः, तथा स्वभावोच्चारितवाक्यमपि कश्चिन्न श्रुतवानिति मन्तव्यं तेन रामस्यातिनिकटेऽपि स्वाभाविकवाक्योच्चारणे तच्छ्रवणेन रामस्य न सीतापरिचय इति बोध्यम्।

रामः। सर्वतो विलोक्य सनिर्वेदम्। हा! न काचिदत्र!। (ठ)

सीता। भअवदि! तमसे! णिक्कारणपरिच्चाइणो वि एदस्स एदिणा एवंविधेण दंसणेण कीदिसो मे हिअआणुबन्धोत्ति ण आणामि ण आणामि। (ड)

---

(ड) भगवति! तमसे! निष्कारणपरित्यागिनोऽपि एतस्य एतेन एवंविधेन दर्शनेन कीदृशो मे हृदयानुबन्ध इति न जानामि न जानामि।

---

(ठ) राम इति। सर्वतः सर्वासु दिक्षु। निर्वेदेन आत्मावमाननया सहेति सनिर्वेदम्। सीताया अदर्शनेऽपि तदुद्देशेन विलापसम्बोधनादिकरणात् निर्णयानर्हतया आत्मनोऽवमाननेति बोध्यम्। तथा च साहित्यदर्पणः—

"तत्त्वज्ञानापदीर्ष्यादेर्निर्वेदः स्वावमानना।"

अत्र स्थाने काचित् कापि व्यक्तिर्न नास्तीत्यर्थः। सुतरां कुतः सीतेति भावः।

(ड) सीतेति। एतस्य आर्य्यपुत्रस्य रामस्य। एवंविधेन दर्शनेन शोककातरत्व-दर्शनेनेत्यर्थः। हृदयानुबन्धः मनसोऽवस्था। इति न जानामि निर्णेतुं न शक्नोमीत्यर्थः। तामवस्थामनुपदमेव तमसा विवृणोति। न जानामीत्यस्य दैन्ये द्विर्वचनम्।

---

(ট) সীতা। ( শোকবশতঃ অস্পষ্ট উচ্চারণের সহিত ) আর্য্যপুত্র! এই ঘটনায় এরূপ উক্তি, অনুপযুক্ত। ( অশ্রুপাতের সহিত ) যে বজ্রের ন্যায় কঠিন, জন্মান্তরেও যাহার দুর্লভদর্শন অনিশ্চিত এবং যে মন্দভাগ্যা, সেই আমার উদ্দেশে এইরূপ উক্তিকারী আর্য্যপুত্রের উপরে আমি কি নির্দ্দয় হইতে পারি? আমি ইঁহার হৃদয় জানি এবং ইনি আমার হৃদয় জানেন।

(ঠ) রাম। ( সকল দিকে দৃষ্টিপাত করিয়া আত্মাবমাননার সহিত ) হায়! এখানে কেহই নাই!।

(ড) সীতা। ভগবতি! তমসে! বিনা কারণে পরিত্যাগ করিয়া

तमसा। जानामि वत्से! जानामि। (ढ)

तटस्थं नैराश्यादपि च कलुषं विप्रियवशा-
द्वियोगे दीर्घेऽस्मिन् झटिति घटनोत्तम्भितमिव।
प्रसन्नं सौजन्यादपि तु करुणैर्गाढ़करुणं
द्रवीभूतं प्रेम्णा तव हृदयमस्मिन् क्षण इव ॥१३॥

---

(ढ) तमसेति। जानामि तव हृदयावस्थामिति शेषः। अवधारणे द्विर्वचनं जानाम्येवेत्यर्थः।

किमिव जानासीत्याह तटस्थमिति। तव हृदयं मनः, नैराश्यात् पुनः संयोगसम्भावनाया अभावात् तटस्थमुदासीनं संयोगोपायकरणादौ निस्पृहमित्यर्थः, अपि च तथा विप्रियवशात् प्रियस्य विरुद्धो विप्रियः दुर्व्यवहारः तद्वशात् अकारणपरित्यागजनितविद्वेषनिबन्धनादित्यर्थः कलुषं क्रोधेनाविलं पूर्वमासीदित्यर्थः तथा अस्मिन् दीर्घे अनन्तकालव्यापिनि वियोगे विच्छेदमध्ये अस्मिन् क्षणे समये झटिति अकस्मात् घटनया मेलनेन उत्तम्भितमिव स्तब्धप्रायम् आश्चर्य्यवशादितिकर्त्तव्यताज्ञानशून्यमेवेत्यर्थः तथा सौजन्यात् प्रेमप्रकाशकसम्बोधनादिना साधुत्वप्रकाशात् प्रसन्नं सन्तुष्टम्, अपि तु तथा करुणैः विलापादिना शोकप्रकाशैः गाढ़ः तीव्रः शोको यस्मिन् तादृशम्, रामस्य शोकार्त्तत्वदर्शनात् तवापि तीव्रशोकातुरं मन इत्यर्थः, तथा प्रेम्णा प्रचुरप्रणयप्रकाशिनेत्यर्थः द्रवीभूतमिव आनन्देन गलितमिव।

अत्र भावाभिमानि वाच्यं क्रियोत्प्रेक्षाद्वयम्, तथा नैराश्यादिकारणेन सह तटस्थत्वादिकार्य्यस्य वर्णनात् हेतुर्नामालङ्कारश्च अनयोरङ्गाङ्गिभावेन सङ्करः। तथा च चन्द्रालोके—

"हेतोर्हेतुमता सार्द्धं वर्णनं हेतुरुच्यते।"

उत्तम्भितमिति "उदःस्थास्तम्भो"रिति स्तम्भेः सलोपः। शिखरिणी वृत्तम् ॥१३॥

---

থাকিলেও, ইহার এই ঈদৃশ দর্শনে, আমার মনের অবস্থা যে কিরূপ হইয়াছে, তাহা আমি বুঝিতেছি না, তাহা আমি বুঝিতেছি না।

(ঢ) তমসা। আমি বুঝিতেছি, বৎসে! আমি বুঝিতেছি।

रामः । देवि ! ।

प्रसाद इव मूर्त्तस्ते स्पर्शः स्नेहार्द्रशीतलः ।
अद्याप्यानन्दयति (१) मां त्वं पुनः क्वासि नन्दिनि ! ॥१४॥

सीता । एदे दे अगाधदंसिदसिणेहसम्भारा आणन्दणिस्सन्दिणो सुदा मए अज्जउत्तस्स उल्लावा, जाणं पच्चएण णिक्कारणपरिच्चाअसल्लिदोवि बहुमदो मे जम्मलाहो । (ग)

(ग) एते ते अगाधदर्शितस्नेहसम्भारा आनन्दनिष्यन्दिनः श्रुता मया आर्य्यपुत्रस्य उल्लापाः, येषां प्रत्ययेन निष्कारणपरित्यागशल्यितोऽपि बहुमतो मे जन्मलाभः

प्रसाद इति । स्नेहेन प्रेम्णा आर्द्रः क्लिन्नः अतएव शीतलः ते तव स्पर्शः, मूर्त्तः मूर्त्तिमान् प्रसाद इव अनुग्रह इव अद्यापि स्पर्शक्षणे का कथा स्पर्शध्वंसक्षणेऽपि माम् आनन्दयति सुखीकरोति, पुनः किन्तु हे नन्दिनि ! आनन्दकारिणि ! त्वं क्व कुत्रासि ? । त्वमेतावत्येव मम प्रियतमा, यत्तव स्पर्शाभावेऽपि तत्स्मरणादेव आनन्दमनुभवामीति भावः ।

अत्र भावाभिमानिनी वाच्या गुणोत्प्रेक्षा, तथा शीतलत्वं प्रति स्नेहार्द्रत्वपदार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गम्, तथा स्पर्शरूपाधाराभावेऽपि आनन्दजननक्रियारूपतदाधेयसद्भावात् विशेषस्य अलङ्कारः, एतेषामङ्गाङ्गिभावेन सङ्करः ॥१४॥

তোমার মন, নৈরাশ্যবশতঃ উদাসীন; অপ্রিয় আচরণবশতঃ কলুষিত; এই দীর্ঘ বিরহের মধ্যে হঠাৎ সম্মেলন হওয়ায় স্তব্ধের মত; সৌজন্যবশতঃ প্রসন্ন; আবার শোকদর্শনে প্রগাঢ় শোকাক্রান্ত এবং এই ক্ষণে প্রেমবশতঃ যেন দ্রবীভূত হইয়া পড়িয়াছে ॥১৩॥

রাম। দেবি! স্নেহবশতঃ আর্দ্র ও শীতল তোমার স্পর্শ, মূর্ত্তিমান্ অনুগ্রহের ন্যায়, এখনও আমাকে আনন্দিত করিতেছে; আর হে আনন্দকারিণি! তুমি কোথায় আছ? ॥১৪॥

(१) अद्याप्यार्द्रयति इति पाठान्तरम् ।

राम:। अथवा कुत: प्रियतमा, नूनं सङ्कल्पाभ्यास-पाटवोपादान (१) एष रामस्य भ्रम:। (त)

नेपथ्ये। प्रमाद: प्रमाद:। "सीतादेव्या: स्वकरकलितै"रित्यर्द्धं पठ्यते। (थ)

(ण) सीतेति। अगाधम् अनन्तं यथा स्यात्तथा दर्शित: स्नेहसम्भार: प्रणयातिशयो यैस्ते तथोक्ता:, आनन्दनिष्यन्दिन: सुखस्राविण: सुखवर्द्धका इत्यर्थ: उल्लापा उच्चैर्विलापा:। येषाम् उल्लापानां प्रत्ययेन विश्वासेन, सदैव एते उल्लापा: श्रुतिसुखकरा भविष्यन्तीति विश्वासेनेत्यर्थ: निष्कारणपरित्याग एव शल्यं शङ्कु: तज्जातमस्येति स तथोक्त: जन्मलाभ: बहुमत: श्लाघ्यतया मन्यत इत्यर्थ:। एते आर्य्यपुत्रस्य उल्लापा ईदृशी मे प्रिया:, यदेषां निकटे अकारणपरित्यागदु:खं तुच्छं मन्यत इति भाव:।

(त) राम इति। महारण्ये निर्वासनेन मृताया: सीताया अत्रागमनसम्भावना नास्त्येवेति विवेकोदयादाह अथवेति। सङ्कल्प: 'सीता अत्रास्ति एवञ्च ब्रवीति' इत्यादि-मनोवृत्ति:, तस्य अभ्यासेन पौन:पुन्येन यत पाटवं नैपुण्यम्, 'सीता अत्रास्ति एवञ्च ब्रवीति' इत्यादिधारणाया: सर्वदाकरणपटुत्वमित्यर्थ: तदेव उपादानं कारणं यस्य स तथोक्त:। भ्रमो भ्रान्तिरिति नूनं निश्चय:। सर्वदैव सीतायाश्चिन्तया प्रायेण सर्वत्र तां पश्यामीति भ्रमो जायत इति सरलार्थ:।

(थ) नेपथ्य इति। प्रमादशब्दस्यार्थ: पूर्वमेव निरूपित:। पठ्यते वासन्तीति शेष:। एवं परत्रापि बोध्यम्।

---

(ণ) সীতা। অসীমস্নেহসূচক ও আনন্দবর্ষী এই সেই আর্য্যপুত্রের উচ্চ বিলাপ আমি শুনিলাম; অকারণ পরিত্যাগনিবন্ধন শল্যবিদ্ধসদৃশ হইলেও, আমার জন্মলাভকে আমি, যে উচ্চ বিলাপের বিশ্বাসবশতঃ শ্লাঘ্য বলিয়া মনে করি।

(ত) রাম। অথবা, কোথায় প্রিয়তমা? নিশ্চয়ই সর্ব্বদা ভাবনার অভ্যাসজনিত ইহা রামের ভ্রম।

---

(१) पाटवोत्पाद इति पाठभेद:।

**रामः।** सकरुणौत्सुक्यम्। **किं तस्य?।**

पुनर्नेपथ्ये। "वध्वा सार्द्ध"मित्युत्तरार्द्धं पठ्यते।

**सीता। को दाणिं णिउज्जिस्सदि (१)। (द)**

**रामः। क्वासौ दुरात्मा, यः प्रियायाः पुत्रकं वधूद्वितीय-मभिभवति।** इत्युत्तिष्ठति। (ध)

(द) क इदानीं नियोक्ष्यते।

---

(द) सीतेति। इदानीं सहायशून्यावस्थानसमये, को जनः नियोक्ष्यते मत्पुत्रक करिकलभकसाहाय्यार्थं प्रेष्यते मयेति शेषः। तस्य साहाय्यार्थं कमपि प्रेरयितुं न शक्नोमि महादुःखमेतदिति भावः।

(ध) राम इति। क्व वर्त्तत इति शेषः। वधूर्भार्य्या काचित् हस्तिनी, द्वितीया द्वयोः संख्ययोः पूरणी सहचारिणीति यावत् यस्य तं वध्वा सह विहरन्तमित्यर्थः अभिभवति आक्रामति। तमहं गत्वा व्यापादयामीति भावः। उत्तिष्ठति साहाय्यकरणाय गन्तुमित्यर्थः।

अत्र "द्वितीया सहधर्म्मिणी"त्यमरकोषात् वधूद्वितीयेत्यैकार्थशब्दद्वयमाशङ्क्य आपाततः पुनरुक्तत्वप्रतीतिः परञ्च द्वितीयशब्दनिश्चयेन तस्य द्वित्वसंख्यापूरणार्थत्वावगमात् पुनरुक्त-वदाभासोऽलङ्कारः।

---

(থ) নেপথ্যে। প্রমাদ প্রমাদ। ("সীতাদেব্যাঃ" ইত্যাদি শ্লোকার্দ্ধ পাঠ করিল।)

রাম। (শোক ও উৎকণ্ঠার সহিত) তাহার কি?।

পুনরায় নেপথ্যে। ("বধ্বা সার্দ্ধং" ইত্যাদি পরার্দ্ধ পাঠ করিল।)

(দ) সীতা। এখন কাহাকে নিযুক্ত করি?।

(ধ) রাম। ঐ দুরাত্মা কোথায়? যে, বধূর সহিত প্রিয়তমার পুত্রকে আক্রমণ করিতেছে। (ইহা বলিয়া উঠিলেন।)

---

(१) अहिउज्जिस्सदि इति पाठान्तरम्। अभियोक्ष्यति इति तदनुवादः।

प्रविश्य सम्भ्रान्ता वासन्ती। कथं देवो रघुनन्दनः। (न)

सीता। कहं पिअसही मे वासन्ती। (प)

वासन्ती। जयति जयति देवः।

रामः। निरूप्य। कथं देव्याः प्रियसखी वासन्ती। (फ)

वासन्ती। देव! त्वर्य्यतां त्वर्य्यतां, इतो जटायुगिरिशिखरस्य दक्षिणेन सीतातीर्थेन गोदावरीमवतीर्य्य सम्भावयतु देव्याः पुत्रकं देवः। (ब)

---

(प) कथं प्रियसखी मे वासन्ती।

---

(न) प्रविश्येति। सम्भ्रान्ता आक्रान्तसीतापुत्रक-करिकरभस्य रक्षकाप्राप्त्या अस्थिरचित्ता। कथमिति निर्णयाश्चर्य्यसूचकमव्ययम्।

(ब) वासन्तीति। त्वर्य्यतां त्वरा क्रियतां सत्वरं गम्यतामित्यर्थः। सम्भ्रमे द्विर्वचनम्। सत्वरं गत्वा मया किं कर्त्तव्यमित्याह इत इति। इतः स्थानात्। जटायोर्गिरिशिखरं जटायुना अध्युषितपूर्वं पर्वतशृङ्गमित्यर्थः तस्य दक्षिणेन दक्षिणदिग्-वर्त्तिना सीतायास्तीर्थं जलावतारो घट्ट इति यावत् तेन, येन घट्टेन सीता जलादिमानेतुं गोदावरीं गतवती तेन घट्टेनेत्यर्थः। अवतीर्य्य प्रविश्य। देव्याः पुत्रकं सीतायाः कृतकपुत्रं त करिशावकं सम्भावयतु साहाय्यकरणेन प्रीणयतु, देवो राजा भवान्।

"जटायुश्च जटायुषा" इति द्विरूपकोषः। "तीर्थं जलावतारे योनौ च" इत्यजयः।

---

(न) বাসন্তী। (ব্যস্ত অবস্থায় প্রবেশ করিয়া) মহারাজ রামচন্দ্র যে!।

(প) সীতা। আমার প্রিয়সখী বাসন্তী যে!।

বাসন্তী। মহারাজের জয় হউক, মহারাজের জয় হউক।

(ফ) রাম। (নিরূপণ করিয়া) সীতাদেবীর প্রিয়সখী বাসন্তী যে!।

(ব) বাসন্তী। মহারাজ! তাড়াতাড়ি করুন তাড়াতাড়ি করুন। এখান হইতে জটায়ুগিরিশৃঙ্গের দক্ষিণ সীতাতীর্থদ্বারা গোদাবরীতে অবতীর্ণ হইয়া, মহারাজ সীতাদেবীর পুত্রকে রক্ষা করুন।

सीता। हा ताद! जटाओ! सुसं तुए विणा जणट्ठाणं। (भ)

रामः। अहह! हृदयमर्म्मच्छिदः खल्वमी कथोद्घाताः। (म)

वासन्ती। इत इतो देवः। (य)

सीता। भअवदि! सच्चअं एव्व वणदेवदावि मं ण पेक्खदि?। (र)

---

(भ) हा तात! जटायो! शून्यं त्वया विना जनस्थानम्।

(र) भगवति! सत्यकमेव वनदेवतापि मां न प्रेक्षते?।

---

(भ) सीतेति। श्वशुरमिवत्वेन जटायुषः तात इति सीतया सम्बोधनं कृतम्। शून्यं शून्यमिव।

(म) राम इति। कथानां जटायुगिरिशिखर-सीतातीर्थ-गोदावरी-देवीपुत्रकपदानाम् उद्घाताः उच्चारणानि, हृदयमर्म्मच्छिदः तत्तत्पूर्ववृत्तान्तस्मारकत्वेन शोकोदयजननात् हृदयविदारका इत्यर्थः।

(य) वासन्तीति। देवो भवान्, इतः इतः अस्मादस्मात् स्थानात् आगच्छत्विति शेषः।

(र) सीतेति। समीपवर्त्ती रामः, समागता वनदेवता वासन्ती च कथमप्यालापाकरणात् आत्मानं न पश्यतीति प्रत्यक्षीकृत्य आश्चर्य्यान्विता सीता तमसां पृच्छति भगवतीति। सत्यकमिति स्वार्थे कः।

---

(ভ) সীতা। হা পিতঃ! জটায়ু! আপনি ভিন্ন জনস্থান শূন্য হইয়াছে।

(ম) রাম। অহহ! এই বাক্যপ্রয়োগগুলি হৃদয়ের মর্ম্মস্থান ছেদ করিতেছে।

(য) বাসন্তী। মহারাজ এই এই স্থান দিয়া আসুন।

(র) সীতা। ভগবতি! সত্যই কি বনদেবতাও আমাকে দেখিতে পান না।

तमसा। अयि वत्से! सर्वदेवताभ्यः प्रकृष्टमैश्वर्य्यं भागीरथीदेव्याः तत् किमाशङ्कसे। (ल)

सीता। तदो अणुसरह्म। इति परिक्रामतः। (व)

रामः। (परिक्रम्य) भगवति! गोदावरि! नमस्ते।

(व) ततोऽनुसराव:।

---

(ल) तमसेति। भागीरथीदेव्या गङ्गाया ऐश्वर्य्यम् अणिमादिशक्तिः सर्वदेवताभ्यः प्रकृष्टं प्रबलम्, तत् तस्मात् किं कथम् आशङ्कसे अन्यो द्रक्ष्यतीत्याशङ्कां करोषीत्यर्थः। उत्कृष्टैश्वर्य्यशालिन्या गङ्गाया वरप्रभावेण निकृष्टैश्वर्य्यशालिनी वनदेवता त्वां द्रष्टुं न शक्नुयादिति त्वं यथेच्छं विचरितुमर्हसीति भावः।

ऐश्वर्य्यञ्च—"अणिमा लघिमा प्राप्तिः प्राकाम्यं महिमा तथा।
ईशित्वञ्च वशित्वञ्च तथा कामावशायिता॥"

"अणिमा अणुभावः, यतः शिलामपि प्रविशति। लघिमा लघुभावः यतः सूर्य्यमरीचीनालम्ब्य सूर्य्यलोकं याति। महिमा महतो भावः यतो महान् भवति। प्राप्तिरङ्गुल्यग्रेण स्पृशति चन्द्रम्। प्राकाम्यमिच्छानभिघातः यतो भूमावुन्मज्जति निमज्जति यथोदके वशित्वं भूतभौतिकं वशीभवत्यवश्यम्। ईशित्वं भूतभौतिकानां प्रभवव्यूहव्ययानामीष्टे। यत्र कामावसायित्वं सत्यसङ्कल्पता, यथास्य सङ्कल्पो भवति भूतेषु तथैव भूतानि भवन्ति।" इति सांख्यतत्त्वकौमुद्यां वाचस्पतिमिश्राः। तत्र कामावसायितारूपैश्वर्य्येण वरप्रदानादिकमिति बोध्यम्।

(व) सीतेति। ततस्तस्मात् निःसंशयाद्दृश्यत्वात् अनुसरावः पश्चात् गच्छावः, आवाम् आर्य्यपुत्रवासन्त्याविति शेषः। परिक्रामतः सीतातमसे इति शेषः।

---

(ল) তমসা। অয়ি বৎসে! গঙ্গাদেবীর ঐশ্বর্য্য-(প্রভাব), সকল দেবতা হইতেই অধিক; তা আশঙ্কা করিতেছ কেন।

(ব) সীতা। তবে (উঁহাদের) অনুসরণ করি। (ইহা বলিয়া উভয়ে পদক্ষেপ করিতে লাগিলেন।)

वासन्ती। निरूप्य। देव! देव! मोदस्व विजयिना वधूद्वितीयेन देव्याः पुत्रकेण। (ग्र)

राम। विजयतामायुष्मान्।

सीता। अम्महे! ईदिशो एसो संवुत्तो। (ष)

रामः। देवि! दिष्ट्या वर्द्धसे। (स)

येनोद्गच्छद्बिसकिसलयस्निग्धदन्ताङ्कुरेण
व्याकृष्टस्ते सुतनु! लवलीपल्लवः कर्णपूरात् (१)।
सोऽयं पुत्रस्तव मदमुचां वारणानां विजेता
यत् कल्याणं वयसि तरुणि भाजनं तस्य जातः॥१५॥

(ष) अहो! ईदृश एष संवृत्तः।

(ग्र) वासन्तीति। निरूप्य निश्चयेनावलोक्य। देव देवेति हर्षे द्विरुक्तिः। मोदस्व आनन्दितो भव। सीतायाः कृतकपुत्रेण करिशावकेन उद्दामदन्तिपराजयकरणादिति भावः।

(ष) सीतेति। अहो आश्चर्य्यम्। एष कृतकपुत्रो मे करिशावकः, ईदृशः महाबलः संवृत्तः जातः, अतीवसुखकारणमेतदिति भावः।

(स) राम इति। दिष्ट्या भाग्येन वर्द्धसे वृद्धिं प्राप्नोषि सम्पद्युक्तासीत्यर्थः। अप्रत्यक्षामपि सीतामुद्दिश्य रामस्योक्तिरियम्।

রাম। (পদক্ষেপ করিয়া) ভগবতি! গোদাবরি! আপনাকে নমস্কার।

(শ) বাসন্তী। (নিরূপণ করিয়া) মহারাজ! মহারাজ! বিজয়ী বধূসহচর সীতাদেবীর পুত্রদ্বারা আপনি আনন্দিত হউন।

রাম। আয়ুষ্মান্ বিজয়ী হউক।

(ষ) সীতা। ওমা! এ, এইরূপ হইয়াছে!।

(স) রাম। দেবি! ভাগ্যবশতঃ তুমি উন্নতিশালিনী হইয়াছ।

(१) कर्णमूलादिति पाठान्तरम्।

सीता। अविउत्तो दाणिं अअं दीहाउ इमाए सोम्म-दंसणाए होदु। (ह)

(ह) अवियुक्त इदानीमयं दीर्घायुरनया सौम्यदर्शनया भवतु।

वृद्धिं प्रति हेतुमाह येनेति। शोभना सुन्दरी तनूर्यस्याः तत्सम्बोधनम्। उद्गच्छन्तौ उत्तिष्ठन्तौ विसकिसलयवत् मृणालाग्रभागवत् स्निग्धौ कोमलौ दन्ताङ्कुरौ यस्य तेन तथोक्तेन येन करिशावकेन ते तव कर्णपूरात् कर्णालङ्कारात् कर्णाभरणमध्यादित्यर्थः लवल्याः वृक्षविशेषस्य ( लोयाड़ि, लोयाइल इति प्रसिद्धस्य ) पल्लवः व्याकृष्टः शुण्डया आकृष्य नीतः। शैशवीयकोमलशरीरस्वभाव आसीदिति भावः। अयं दृश्यमानः स तव पुत्रः करिशावकः मदमुचां दानजलस्राविणां महाबलवतामिति भावः। वारणानां हस्तिनां विजेता जात इति शेषः। अतएव तरुणे वयसि यौवने काले यत् कल्याणं महाबलवत्त्वेन शत्रुनिराकरणात् मङ्गलं स्यात् प्राणिनामिति शेषः तस्य कल्याणस्य भाजनं पात्रं जातः महाबलवान् भूत इत्यर्थः।

अत्र प्रथमचरणे लुप्तोपमा, तथा चतुर्थचरणार्थं प्रति तृतीयचरणवाक्यार्थो हेतुरिति वाक्यार्थहेतुकं काव्यलिङ्गञ्च अनयोरङ्गाङ्गिभावेन सङ्करः।

सुतनु इति "स्त्रियां मूर्त्तिस्तनुस्तनू"रित्यमरोक्तदीर्घान्ततनूशब्दस्य सम्बुद्धौ ह्रस्वः। "उद्देश्यविधेययोरुद्देश्यवचनत्वमाख्यातस्ये"ति काशिकाप्रामाण्यात् जात इत्यत्र पुंस्त्वम्। आख्यातस्य प्रधानक्रियाया इति तदर्थः।

मन्दाक्रान्ता वृत्तम् ॥१५॥

(ह) सीतेति। अयं दीर्घायुः दीर्घकालजीवी मम पुत्रकः अनया दृश्यमानया सौम्यदर्शनया प्रियदर्शनया स्वभार्य्यया करिण्येत्यर्थः अवियुक्तः अविच्छिन्नः चिरमेकत्राव-

হে সুন্দরি! মৃণালাগ্রের ন্যায় দুইটী দাঁতের অঙ্কুর উঠিতেছিল এই অবস্থায় যে হস্তিশাবকটী, তোমার কর্ণালঙ্কার হইতে লোয়াইলের পল্লব আকর্ষণ করিয়া লইত; এই তোমার সেই পুত্র, মদস্রাবী হস্তিগণের বিজেতা হইয়া, যৌবনবয়সে লোকের যে মঙ্গল হইয়া থাকে, সেই মঙ্গলের পাত্র হইয়াছে ॥১৫॥

रामः। सखि! वासन्ति! पश्य पश्य, कान्तानुवृत्ति-चातुर्य्यमप्यनुशिक्षितं वत्सेन। (क्ष)

लीलोत्खातमृणालकाण्डकवलच्छेदेषु सम्पादिताः (१)
पुष्यत्पुष्करवासितस्य (२) पयसो गण्डूषसंक्रान्तयः।
सेकः शीकरिणा करेण विहितः कामं विरामे पुन-
र्यत्स्नेहादनरालनालनलिनीपत्रातपत्रं धृतम् ॥१६॥

स्थित इति यावत्। दम्पत्योर्विरहजन्यं परस्परदुःखं जगति सर्वदुःखेभ्यो दारुणमिति स्वयमनिशमनुभवन्ती सीता, तत् दुःखं यथा पुनस्तयोस्तयोः करिकरिण्योर्न स्यात् तयाभिसन्धाय आशीर्वादान्तरमकृत्वा चिरसंयोगाशीर्वादं कृतवतीति बोध्यम्।

(क्ष) राम इति। कान्ताया भार्य्याया अनुवृत्तौ अनुनये सन्तोषोपयोगीति तात्पर्य्यं यत् चातुर्य्यं नैपुण्यं तत् वत्सेन करिशावकेन अनुशिक्षितं शिक्षाया लब्धम्। एतेन सीताया अभावेन तदनुवृत्तिकरणासामर्थ्यात् रामस्य मनसि दारुणं दुःखमिति व्यज्यते।

पश्य पश्येति विस्मये द्विर्वचनम्।

कथमेतज्ज्ञायत इत्याह लीलेति। यत् यस्मात् स्नेहात् प्रणयवशात् लीलया अवहेलया अनायासेनेति यावत् उत्खाता उत्पाटिता ये मृणालकाण्डाः मृणालस्तम्बाः तेषां कवलच्छेदेषु ग्रासार्थखण्डेषु करिणीमुखवर्त्तिष्वित्यर्थः, पुष्यद्भिः प्रस्फुटितैः पुष्करैः पद्मैः तेषां वासितस्य सुगन्धीकृतस्य पयसो जलस्य गण्डूषाणां मुखपूरणानां संक्रान्तयः सञ्चाराः सम्पादिताः कृताः करिणीमुखवर्त्तिषु मृणालकवलेषु निजमुखपूरितं जलं वेगेन विक्षिप्तमित्यर्थः। तथा शीकरिणा जलविन्दुशालिना करेण शुण्डादण्डेन सेकः करिण्या

(ङ) সীতা। এখন এই দীর্ঘায়ু (হস্তিশাবক), এই সৌম্যদর্শনা হস্তিনীর সহিত (চিরকাল) অবিচ্ছিন্ন হউক।

(ক্ষ) রাম। সখি! বাসন্তি! দেখুন দেখুন, বৎস (হস্তিশাবক), প্রিয়তমার অনুবৃত্তি করিবার নৈপুণ্যও শিখিয়াছে।

(१) सम्पातिता इति पाठान्तरम्। (२) पुष्पत्पुष्कर इति पाठभेदः।

सीता। भअवदि! तमसे! अअं दाव ईदिसो जादो, दे उण ण आणामि कुसलवा एत्तिकेण कालेण कोदिसा विअ होन्ति। (क)

(क) भगवति! तमसे! अयं तावदीदृशो जातः, तौ पुनर्न जानामि कुशलवौ एतावता कालेन कीदृशाविव भवतः।

गात्रोपरिसेचनं कामं पर्य्याप्तं यथा स्यात्तथा विहितः कृतः; पुनः ततः परमित्यर्थः विरामे सेकावसाने अनरालम् अवक्रं सरलं नालं यस्य तादृशं यत् नलिनीपत्रं पद्मपत्रं तदेव आतपत्रं छत्रं धृतं शुण्डादण्डेन करिण्या गात्रोपरि गृहीतमित्यर्थः। एभिर्व्यापारैः कान्तानुवृत्तिचातुर्य्यमिचा सुव्यक्तं वेति भावः।

अत्र स्वभावोक्तिरलङ्कारः, तथा नलिनीपत्रातपत्रमिति निरङ्गं केवलं रूपकञ्चेत्यनयो-रङ्गाङ्गिभावेन सङ्करः; तथा छेकानुप्रासवृत्त्यनुप्रासयोश्च संसृष्टिः। "मधु द्विरेफः कुसुमैकपात्रे" इत्यादिवदत्र तिर्य्यग्जातिगतत्वात् शृङ्गाररसाभासः।

"काण्डः स्तम्बे तरुस्कन्धे बाणावसरयोरपी"ति मेदिनी। "गण्डूषः। मुखपूरण"मिति शब्दकल्पद्रुमः। "शीकरोऽम्बुकणः स्मृतः।" "कामं प्रकामं पर्य्याप्तं निकामेष्टं यथेप्सितम्।" "अरालं कुटिलं वक्र"मिति चामरः।

शार्दूलविक्रीड़ितं वृत्तम् ॥१६॥

(क) सीतेति। अयं कृतकपुत्रः करिशावकः, ईदृशो यौवनोचितवृद्धिबलवान् कीदृशाविव यौवनोचितवृद्धियलशालिनौ तदशालिनौ वा इति न जानामीत्यर्थः।

अत्र न जानामीति वाक्यस्य तौ पुनरित्यादिवाक्यान्तरे प्रवेशादपि सीतायाः स्नेहोदयेन व्याकुलीभूतत्वात् "दिङ्मातङ्गघटे"त्यादिसाहित्यदर्पणोदाहृतवत् न गर्भितत्वदोषः।

যে হেতু, হস্তিনী, অবলীলাক্রমে কতকগুলি মৃণাল তুলিয়া, তাহার খণ্ডসকল, মুখমধ্যে ধারণ করিয়াছে; এদিকে এই হস্তিশাবক প্রস্ফুটিত পদ্মদ্বারা সুবাসিত নিজমুখস্থিত জল, ঐ হস্তিনীর মুখস্থিত মৃণালখণ্ডগুলির উপরে পর্য্যাপ্তরূপে সঞ্চারিত করিতেছে এবং তাহার পর, (হস্তিনীর গাত্রের উপরে) সরলনালসমন্বিত পদ্মপত্রের ছত্র ধারণ করিয়াছে ॥১৬॥

तमसा। यादृशोऽयं तादृशौ तावपि। (ख)

सीता। ईदिसी अहं मन्दभाइणी, जाए ण केवलं णिरन्तरं अज्जउत्तविरहो पुत्तविरहोवि। (ग)

तमसा। भवितव्यतेयमीदृशी। (घ)

सीता। किंवा मए पसूदाए, जेण तादिसं पि मम पुत्तकाणं ईसिविरलकोमलधवलदसणुज्जलकवोलं अणुवद्ध-

(ग) ईदृशी अहं मन्दभागिनी, यस्या न केवलं निरन्तरमार्य्यपुत्रविरहः पुत्र-विरहोऽपि।

(ङ) किंवा मया प्रसूतया, येन तादृशमपि मम पुत्रकयोः ईषद्विरलकोमलधवल-

(ख) तमसेति। अयं करिशावकः यादृशो यौवनोचितशरीरपुष्टिबलशाली जातः तावपि कुशलवौ तादृशौ शरीरपुष्टिबलशालिनौ जातावित्यर्थः। कालेन वृद्धिबलयोः समानन्यायादिति भावः।

(ग) सीतेति। विरहो वियोगः। पतिपुत्रयोर्बहुकालविरहादेव अहं मन्द-भागिनीति भावः।

(घ) तमसेति। इयं त्वया अनुभूयमाना ईदृशी पतिपुत्रयोर्विरहकारिणी भवि-तव्यता भाग्यम्। दुरदृष्टेनैव तवायं पतिपुत्राभ्यां विरहः कृतः न तु केनचिन्मनुष्येणेति न शोचनीय इति भावः।

"भवितव्यता। भाग्य"मिति शब्दकल्पद्रुमः।

(क) সীতা। ভগবতি! তমসে! এ, এই রকম হইয়াছে; জানি না, এতকালে সেই কুশ ও লব কি রকম হইল।

(খ) তমসা। এ, যেরূপ হইয়াছে; তাহারাও সেইরূপই হইয়াছে।

(গ) সীতা। আমি এমনই মন্দভাগিনী, যাহার সর্ব্বদা কেবল স্বামীর বিরহ নহে, পুত্রের বিরহও।

(ঘ) তমসা। দৈবই এইরূপ।

